TRIVANDRUM SANSKRIT SERIES.
No. XXXIX.

महाकविश्रीभासप्रणीतं

# चारुदत्तम् ।

THE

# CHÂRUDATTA

OF

# BHÂSA

EDITED WITH NOTES

BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts, Trivandrum.*

**Bhasa's works:—No. 12**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.




TRIVANDRUM:
PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.
1914.

TRIVANDRUM SANSKRIT SERIES.
No. XXXIX.

# THE CHÂRUDATTA

OF

# BHÂSA

EDITED WITH NOTES

BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts, Trivandrum.*




**Bhasa's works:—No. 12**

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:
PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.
1914.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३९.

# चारुदत्तं

महाकविश्रीभासप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितं

लघुटिप्पण्या च संयोजितम् ।

भासनाटकचक्रे द्वादशम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

---

कोळम्बाब्दाः १०८९, क्रैस्ताब्दाः १९१४.

# PREFACE.

The edition of the work is based on two palm-leaf-manuscripts. They are written in Malayalam characters and are about three or four centuries old, marked in the footnotes as क and ख. The manuscript क belongs to the Library of Manalikkara Matham near Padmanabhapuram in South Travancore, and is full of errors. The other manuscript ख which is comparatively free from errors was obtained from Mr. Nîlakanthan Châkyâr of Mângânam near Kottayam. Both the manuscripts contain neither the benedictory verse at the beginning nor the "*Bharatavâkya*", on the closing verse, at the end, while the manuscript क has the colophon "अवसितं चारुदत्तम्" at the end.

It has already been observed in the introduction of Svapnavâsavadatta, that the play Chârudatta forms the nucleus of the famous Mrichchhakatika of Sûdraka. As regards the plot, the first Acts of the two plays differ very little except that Vasantasenâ is pursued by two persons in the Chârudatta, while she is pursued in the Mrichchhakatika by three persons, namely Vita, Cheta and Sakara. In the second Act of the Chârudatta are not found the characters, Mâthura, Dyûtakara and Darduraka of the Mrichchhakatika, and the Shampooer leaves Vasantasenâ to turn a "*Parivrâṭ*" but not a "Sâkya Sramaṇaka" as in Mrichchhakatika. In the third Act, the plot is the same in both the plays. In the fourth, when Vasantasenâ has overheard the conversation between Madanikâ and Sajjalaka, Vidûshaka steps in to carry out his mission; and Sajjalaka appears before Vasantasenâ only after Vidûshaka is gone, unlike in Mrichchhakatika.

It may be noted that no reference to the story of Âryaka and Pâlaka is found anywhere in Chârudatta. The ideas tersely expressed in Chârudatta are expanded at greater length by

Sûdraka. For instance the Chârudatta contains only the three following verses having meaningless repetitions and wrong allusions of Sakâra :—

" किं याशि धावाशि पधावशि पक्खळन्ती
शाहुप्पशीद ण मळीअशि चिट्ठ दाव ।
कामेण शम्पदि हि जज्झइ मे शळीळं
अङ्गाळमज्झपडिदे विअ चम्मखण्डे ॥ "

" किं वाशुदेवे शहपट्टशेण कुन्तीशुदे वा जणमेजए वा ।
अहं तुमं गह्णिअ केशहत्थे दुश्शाशळे शीदमिवाहळामि ॥ "

" एशा हि वाशू शिळशिग्गहीदा केशेशु वाळेशु शिळोळुहेशु ।
कूजाहि कन्दाहि ळवाहि वात्तं महेश्शळं शङ्कळमिश्शळं वा ॥ "

Similarly, the description of the mansion of Vasantasenâ by Vidûshaka is couched in the following words in the Chârudatta:—

"(प्रविश्य)

विदूषकः — (सर्वतो विलोक्य) अहो गणिआवाडस्स सस्सिरीअदा । णाणापट्टणसमागदेहि आआमिएहि पुत्तआ वाईअन्ति । संओजअन्ति अ आहारप्पआराणि । वीणा वादाअन्ति । सुवण्णआरा अळङ्कारप्पआराणि आदरेण जोजअन्ति । "

While Sûdraka has dragged on the above description, to a tedious length in Mrichchhakatika.

As regards the textual differences in the plays it is found that some of the verses occuring in Chârudatta are copied as such in Mrichchhakatika, some are adapted with a little variation, a few are omitted and a good many verses are also newly added by Sûdraka.

In the prose passages of Mrichchhakatika similar additions and alterations are observable throughout the four Acts.

TRIVANDRUM. T. GANAPATI SÂSTRÎ.

# निवेदना ।

---

**चारुदत्तस्य** संशोधनाधारभूतौ द्वावादर्शौ । तत्रैकः क. संज्ञो **मणलिक्करकल्पकमङ्गलमठीयो**ऽशुद्धिबहुलः, अन्यः **कोट्टयान्तर्गतमाङ्ङानस्थनीलकण्ठशाक्यारसकाशादधिगतस्तदपेक्षया शुद्धः ख. संज्ञः** । द्वावपि जीर्णतालपत्रात्मकौ केरलीयलिपी संभावनीयत्रिचतुरशतवर्षवार्धकौ च ।

अनयोर्मङ्गलश्लोको भरतवाक्यं च न लिखिते । किन्तु क. संज्ञस्यादर्शस्यान्ते "**अवसितं चारुदत्तम्**" इति लिखितमस्ति ।

अनन्तशयनम्. **त. गणपतिशास्त्री.**

# पात्राणि ।

---

## पुरुषाः—

| | |
|---|---|
| विदूषकः — | (मैत्रेयः) |
| नायकः — | (चारुदत्तः) |
| शकारः — | |
| विटः — | |
| संवाहकः — | |
| चेटः — | (मृच्छकटिके कर्णपूरकः) |
| सज्जलकः — | (मृच्छकटिके शर्विलकः) |

## स्त्रियः—

| | |
|---|---|
| गणिका — | (वसन्तसेना) |
| ब्राह्मणी — | (मृच्छकटिके वधूः) |
| रदनिका — | |
| मदनिका — | |
| चेटी — | (रदनिका) |

---

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतं

# चारुदत्तम् ।

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

सूत्रधारः— (क) किण्णुखु अज्ज पच्चूस एव्व गेहादो णिक्खन्तस्य बुभुक्खाए पुक्खरपत्तपडिदजळविन्दू विअ चञ्चळाअन्ति विअ मे अक्खीणि। (परिक्रम्य) जाव गेहं गच्छिअ जाणामि किण्णुहु संविधा विहिदा ण वेत्ति । (परिक्रम्य) एदं अह्माणं गेहं । जाव पविसामि । (प्रविश्यावलोक्य) जह ळोहीपरिवट्टणकाळसारा भूमी (णेउब्भामणसुगन्धो विअ गन्धो सुणिमित्तं विअ ?) परिब्भमन्तो वडिवस्सअजणो । किण्णुखु संविधा विहिदा । आदु बुभुक्खाए ओदणमअं विअ जीवळोअं पेक्खामि । जाव अय्यं सद्दावेमि । अय्ये ! इदो दाव ।

---

(क) किन्नुखल्वद्य प्रत्यूष एव गेहान्निष्क्रान्तस्य बुभुक्षया पुष्करपत्रपतितजलविन्दू इव चञ्चलायेते इव मेऽक्षिणी । यावद् गेहं गत्वा जानामि किन्नुखलु संविधा विहिता न वेति । एतदस्माकं गेहम् । यावत् प्रविशामि । यथा लोहीपरिवर्तनकालसारा भूमिः (णेउब्भामणसुगन्धो विअ गन्धो सुणिमित्तं विअ ?) परिभ्रमन् वरिवस्यकजनः । किन्नुखलु संविधा विहिता । अथवा बुभुक्षयौदनमयमिव जीवलोकं पश्यामि । यावदार्यां शब्दापयामि । आर्ये! इतस्तावत् ।

(प्रविश्य)

**नटी** —(क) अय्य! इअह्मि । अय्य! दिट्ठिआ खु सि आअदो ।

**सूत्रधारः**—(ख) अय्ये! किं अत्थि अह्माणं गेहे को वि पादरासो ।

**नटी** —(ग) अत्थि ।

**सूत्रधारः**—(घ) चिरं जीव । एवं सोभणाणि भोअणाणि दत्तिआ होहि ।

**नटी** —(ङ) अय्य! तुवं एव पडिवाळन्ती चिट्ठामि ।

**सूत्रधारः**—(च) अय्ये! किं अत्थि अब्भत्थिदं ।

**नटी** —(छ) अत्थि ।

**सूत्रधारः**—(ज) एवं देवा तुमं अस्सासअन्तु । अय्ये! किं किं ।

---

(क) आर्य! इयमस्मि । आर्य! दिष्ट्या खल्वस्यागतः ।
(ख) आर्ये! किमस्त्यस्माकं गेहे कोऽपि प्रातराशः ।
(ग) अस्ति ।
(घ) चिरं जीव । एवं शोभनानि भोजनानि दात्री भव ।
(ङ) आर्य! त्वामेव प्रतिपालयन्ती तिष्ठामि ।
(च) आर्ये! किमस्त्यभ्यर्थितम् ।
(छ) अस्ति ।
(ज) एवं देवास्त्वामाश्वासयन्तु । आर्ये! किं किम् ।

**नटी**—(क) घिदं गुळं दहिं तण्डुला अ अत्थि ।

**सूत्रधारः**—(ख) एदं सव्वं अह्माणं गेहे अत्थि ।

**नटी**—(ग) णहि णहि । अन्तळावणे ।

**सूत्रधारः**—(सरोषम्) (घ) आः अणय्ये! एवं दे आसा छिन्दीअदु । अभावं च गमिस्ससि । अहं चण्डप्पवादळ*-ण्डुओ[1] विअ वरण्डी पव्वदादो दूरं आरोविअ पाडिदो ह्मि ।

**नटी**—(ङ) मा भाआहि मा भाआहि । मुहुत्तअं पडिवाळेदु अय्यो । सव्वं सज्जं भविस्सदि । ळद्धं णाम एदं । अज्ज मम उववासस्स अय्यो सहायो होदु ।

**सूत्रधारः**—(च) किण्णामहेओ अय्याए उववासो ।

---

(क) घृतं गुडो दधि तण्डुलश्चास्ति ।

(ख) एतत् सर्वमस्माकं गेहेऽस्ति ।

(ग) नहि नहि । अन्तरापणे ।

(घ) आः अनार्ये! एवं ते आशा छिद्यताम् । अभावं च गमिष्यसि । अहं चण्डप्रवातलण्डित इव वरण्डः पर्वताद् दूरमारोप्य पातितोऽस्मि ।

(ङ) मा बिभिहि मा बिभिहि । मुहूर्तकं प्रतिपालयत्वार्यः । सर्वं सज्जं भविष्यति । लब्धं नामैतत् । अद्य ममोपवासस्यार्यः सहायो भवतु ।

(च) किन्नामधेय आर्याया उपवासः ।

---

१. 'ळड्डुओ' ख. पाठः.

---

* 'ळण्डिओ विअ वरण्डो' इति पाठो भवेत् । 'लण्डित इव वरण्डः' इति च संस्कृतम् । लण्डित उत्क्षिप्तः । वरण्डस्तृणसञ्चयः ।

**नटी**—(क) अभिरूववदी णाम ।

**सूत्रधारः**—(ख) किं अण्णजादीए ।

**नटी**—(ग) आम ।

**सूत्रधारः**—(घ) सव्वं दाव चिट्ठदु । को णु दाणि अय्याए उववासस्स उवदेसिओ ।

**नटी**—(ङ) इमिणा [1]वडिवस्सएण चुण्णगोट्ठेण ।

**सूत्रधारः**—(च) साहु चुण्णगोट्ठ! साहु ।

**नटी**—(छ) जइ अय्यस्स अणुग्गहो, तदो इच्छेअं अह्मारिसजणजोग्गं कञ्चि बह्मणं णिमन्तेदुं ।

**सूत्रधारः**—(ज) धम्मिट्ठो खु णिओओ । तेण पादरासो

---

(क) अभिरूपपतिर्नाम ।

(ख) किमन्यजात्याम् ।

(ग) आम ।

(घ) सर्वं तावत् तिष्ठतु । कोन्विदानीमार्याया उपवासस्योपदेशिकः ।

(ङ) अनेन वरिवस्यकेन चूर्णगोष्ठेन ।

(च) साधु चूर्णगोष्ठ! साधु ।

(छ) यद्यार्यस्यानुग्रहः, तत इच्छेयमस्मादृशजनयोग्यं कञ्चिद् ब्राह्मणं निमन्त्रयितुम् ।

(ज) धर्मिष्ठः खलु नियोगः । तेन प्रातराशोऽपि मे भविष्यति । यद्येवं, प्रवि-

---

1. 'पडिवेस्स' ख. पाठः.

वि मे भविस्सदि । जइ एव्वं, पविसदु अय्या । अहं वि अ-ह्मारिसजणजोग्गं कञ्चि बह्मणं अण्णेसामि ।

नटी—(क) जं अय्यो आणवेदि । (निष्क्रान्ता ।)

सूत्रधारः—(ख) कहिण्णुखु दरिद्दबह्मणं ळभेअं । (विलोक्य) एसो अय्यचारुदत्तस्स वअस्सो अय्यमेत्तेओ णाम बह्मणो इदो एव्व आअच्छदि । जाव उवणिवन्तेमि । (परिक्रम्य) अय्य! णिमन्तिदो सि । आमन्तणस्स मा दरिद्द त्ति मं अवमण्णेहि । सम्पण्णं अह्लिदव्वं भविस्सदि । घिदं गुळं दहि तण्डुला अ सव्वं अत्थि । अविअ दक्खिणमासआणि भविस्सन्ति ।

(नेपथ्ये)

(ग) अण्णं अण्णं णिमन्तेदु दाव भवं । अरित्तओ दाव अहं ।

---

शत्वार्या । अहमप्यस्मादृशजनयोग्यं कञ्चिद् ब्राह्मणमन्वेषे ।

(क) यदार्य आज्ञापयति ।

(ख) कुत्रनुखलु दरिद्रब्राह्मणं लभेय । एष आर्यचारुदत्तस्य वयस्य आर्यमैत्रेयो नाम ब्राह्मण इत एवागच्छति । यावदुपनिमन्त्रयामि । आर्य! निमन्त्रितोऽसि । आमन्त्रणस्य मा दरिद्र इति माम् अवमन्यस्व । सम्पन्नमशितव्यं भविष्यति । घृतं गुडो दधि तण्डुलश्च सर्वमस्ति । अपिच दक्षिणामाषका भविष्यन्ति ।

(ग) अन्यमन्यं निमन्त्रयतु तावद् भवान् । अरिक्तकस्तावदहम् ।

**सूत्रधारः—**

घिदगुळदहिसुसमिद्धं धूविअसूवोवदंससम्भिण्णं ।
सक्कारदत्तमिट्ठं भुञ्जीअदु भत्तमय्येण ॥ १ ॥

(निष्क्रान्तः ।)

स्थापना ।

---

(ततः प्रविशति विदूषकः)

**विदूषकः—** (क) अण्णं अण्णं णिमन्तेदु दाव भवं । अरित्तओ दाव अहं । णं भणामि अहं अरित्तओ त्ति । किं भणासि—'सम्पण्णं असणं अह्निदव्वं भविस्सदि' त्ति । अहं पुण जाणामि । (अहिअमहुरस्स अम्बस्स?) अजोग्गदाए (अण्ठी?) ण भक्खीअदि त्ति । किं दाणि मं उळ्ळालिअ उळ्ळालिअ भणासि । भणामि वावुदो त्ति । किं भणासि—'दक्खिणमासआणि भविस्संदि' त्ति । एसो वाआ पच्चाचक्खिदो हिअएण अणुबन्धीअमाणो गच्छी-

---

घृतगुडदधिसुसमृद्धं धूपितसूपोपदंशसम्भिन्नम् ।
सत्कारदत्तमृष्टं भुज्यतां भक्तमार्येण ॥ १ ॥

(क) अन्यमन्यं निमन्त्रयतु तावद् भवान् । अरिक्तकस्तावदहम् । ननु भणाम्यहमरिक्तक इति । किं भणसि—'सम्पन्नमशनमशितव्यं भविष्यति' इति । अहं पुनर्जानामि । अधिकमधुरस्य अम्ब्लस्य अयोग्यतया (अण्ठी?) न भक्ष्यत इति । किमिदानीं मामुल्लाल्योल्लाल्य भणसि । भणामि व्यापृत इति । किं भणसि 'दक्षिणामाषका भविष्यन्तीति । एष वाचा प्रत्याख्यातो हृदयेनानुबध्यमानो गम्यते। अहो अत्याहितम् । अहमपि नाम परस्यामन्त्रणानीति तर्कयामि। योऽहं तत्रभवतश्चारुदत्तस्य गेहेऽहोरात्रपर्याप्तसिद्धैर्नानाविधैर्हिङ्गुविद्धैरुद्गारणसु

अदि । अहो अच्चाहिदं । अहं वि णाम परस्स आमन्तआणि त्ति तक्केमि । जो अहं तत्तहोदो चारुदत्तस्स गेहे अहोरत्तपय्यत्तसिद्धेहि णाणाविधेहि हिङ्गुविद्धेहि ओग्गारणसुगन्धेहि भूक्खेवमत्तपडिच्छिदेहि अन्तरन्तरपाणीएहि असणप्पआरेहि चित्तअरो विअ बहुमल्लएहि परिवुदो आअण्ठमत्तं अह्लिअ चच्चरवुसहो विअ मोदअखज्जएहि रोमन्थाअमाणो दिवसं खेवेमि, सो एव्व दाणि अहं तत्तहोदो चारुदत्तस्स दरिद्दाए समं पारावदेहि साहारणवुत्तिं उवजीवन्तो अण्णहिं चरिअ चरिअ तस्स आवासं एव्व गच्छामि । अण्णं च अच्छरिअं । मम उदरं अवत्थाविसेसं जाणादि । अप्पेणावि तुस्सदि । बहुअं वि ओदणभरं भरिस्सदि दीअमाणं, ण आएदि अदीअमाणं, ण पच्चाचिक्खदि । ण खु अहं एरिसेण ण सन्तुट्ठो । ता सट्ठीकिददेवकय्यस्स तत्तहोदो चारुदत्तस्स कारणादो गहीदो (सुमणो अन्तळिक्खवासो ?) अ । जाव से पस्सपरिवत्ती होमि । (परिक्रम्यावलोक्य) एसो तत्तभवं चारुदत्तो पभादचन्दो विअ सकरुणप्पिअदंसणो जहा-

---

गन्धिभिः भ्रूक्षेपमात्रप्रतीष्टैरन्तरान्तरपानीयैरशनप्रकारैश्चित्रकर इव बहुमल्लकैः परिवृत आकण्ठमात्रमशित्वा चत्वरवृषभ इव मोदकखाद्यै रोमन्थायमानो दिवसं क्षिपामि, स एवेदानीमहं तत्रभवतश्चारुदत्तस्य दरिद्रतया समं पारावतैः साधारणवृत्तिमुपजीवन् अन्यत्र चरित्वा चरित्वा तस्यावासमेव गच्छामि । अन्यच्चाश्चर्यम् । ममोदरमवस्थाविशेषं जानाति । अल्पेनापि तुष्यति । बहुकमप्योदनभरं भरिष्यति दीयमानं, न याचतेऽदीयमानं, न प्रत्याचष्टे । न खल्वहमीदृशेन न सन्तुष्टः । तत् षष्ठीकृतदेवकार्यस्य तत्रभवतश्चारुदत्तस्य कारणाद् गृहीत (सुमनोऽन्तरिक्षवासः ?) च । यावदस्य पार्श्वपरिवर्ती भवामि । एष तत्रभवांश्चारुदत्तः

विभवेण गिहदेवदाणि अच्चअन्तो इदो एव्व आअच्छदि । जाव णं उवसप्पामि । (निष्क्रान्तः ।)

(ततः प्रविशति बलिमुपहरन्नायको विदूषकश्चाङ्गेरिकाहस्ता चेटी च)

**नायकः**—(दीर्घं निःश्वस्य) भोः ! दारिद्र्यं खलु नाम मनस्विनः पुरुषस्य सोच्छ्वासं मरणम् । कुतः,

यासां बलिर्भवति मद्गृहदेहलीनां
हंसैश्च सारसगणैश्च विभक्तपुष्पः ।
तास्वेव पूर्वबलिरूढयवाङ्कुरासु
बीजाञ्जलिः पतति कीटमुखावलीढः ॥ २ ॥

**विदूषकः**—(क) अलं दाणि भवं अदिमत्तं सन्तप्पिदुं । पुरुसजोव्वणाणि विअ गिहजोव्वणाणि खु दसाविसेसं अणुहोन्ति । आसमुद्दआणविपण्णविभवस्स बहुलपक्खचन्दस्स जोह्लापरिक्खओ विअ भवदो एव्व रमणीओ अअं दरिद्दभावो ।

**नायकः**—न खल्वहं नष्टां श्रियमनुशोचामि । गुणरसज्ञस्य तु पुरुषस्य व्यसनं दारुणतरं मां प्रतिभाति । कुतः,

---

प्रभातचन्द्र इव सकरुणप्रियदर्शनो यथाविभवेन गृहदैवतान्यर्चयन् इत एवागच्छति । यावदेनमुपसर्पामि ।

(क) अलमिदानीं भवानतिमात्रं सन्तप्तुम् । पुरुषयौवनानीव गृहयौवनानि खलु दशाविशेषमनुभवन्ति । आससुद्रयानविपन्नविभवस्य बहुलपक्षचन्द्रस्य ज्योत्स्नापरिक्षय इव भवत एव रमणीयोऽयं दरिद्रभावः ।

---

१. 'कां गृहीत्वा च' ख. पाठः.

सुखं हि दुःखान्यनुभूय शोभते
यथान्धकारादिव दीपदर्शनम् ।
सुखात्तु यो याति दशां दरिद्रतां
स्थितः शरीरेण मृतः स जीवति ॥ ३ ॥

**विदूषकः**—(क) भो वअस्स ! समुद्दपट्टणसारभूदो तादिसो अत्थसञ्चओ कहिं गओ ।

**नायकः**—(निःश्वस्य) वयस्य ! यत्र गतानि मे भागधेयानि । पश्य,

क्षीणा ममार्थाः प्रणयिक्रियासु
विमानितं नैव परं स्मरामि ।
एतत्तु मे प्रत्ययदत्तमूल्यं
सत्त्वं सखे ! न क्षयमभ्युपैति ॥ ४ ॥

(चिन्तां नाटयति ।)

**विदूषकः**—(ख) किं भवं अत्थविभवं चिन्तेदि ।

**नायकः**—

सत्यं न मे धनविनाशगता विचिन्ता
भाग्यक्रमेण हि धनानि पुनर्भवन्ति ।
एतत्तु मां दहति नष्टधनश्रियो मे
यत् सौहृदानि सुजने शिथिलीभवन्ति ॥ ५ ॥

---

(क) भो वयस्य! समुद्रपत्तनसारभूतस्तादृशोऽर्थसञ्चयः क गतः ।

(ख) किं भवानर्थविभवं चिन्तयति ।

अपिच,

दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सत्त्वं हास्यमुपैति शीलशशिनः कान्तिः परिम्लायते* ।
निर्वैरा विमुखीभवन्ति सुहृदः स्फीता भवन्त्यापदः
पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते ॥ ६ ॥

विदूषकः—(क) एदे दाणि दासीएवुत्ता अत्थवावारा गोवदारआ विअ मसअभीदा गिहादो णिग्गच्छन्ति । धणविणासदुःखस्स उण चिन्तिअमाणस्स वसन्ते बुड्ढस्स सरत्थम्बस्स विअ अङ्कुरङ्कुरा उब्भमन्ति । ता अळं भवदो सन्दावेण ।

नायकः—वयस्य! किमर्थं सन्तापं करिष्ये । किञ्चाहं दरिद्रः, यस्य मम,

विभवानुवशा भार्या समदुःखसुखो भवान् ।
सत्त्वं च न परिभ्रष्टं यद् दरिद्रेषु दुर्लभम् ॥ ७ ॥

(ततः प्रविशति गणिका सम्भ्रान्ता विटेन शकारेण चानुगम्यमाना ।)

शकारः—(ख) चिट्ठ चिट्ठ वशन्तशेणिए! चिट्ठ,

---

(क) एत इदानीं दास्याःपुत्रा अर्थव्यापारा गोपदारका इव मशकभीता गृहाद् निर्गच्छन्ति । धनविनाशदुःखस्य पुनश्चिन्त्यमानस्य वसन्ते वृद्धस्य शरस्तम्बस्येवाङ्कुराङ्कुरा उद्भ्रमन्ति । तदलं भवतः सन्तापेन ।

(ख) तिष्ठ तिष्ठ वसन्तसेने! तिष्ठ,

---

* म्लायतीति स्यात् ।

किं याशि धावशि पधावशि पक्खलन्ती
शाहु प्पशीद ण मळीअशि चिट्ठ दाव ।
कामेण शम्पदि हि जज्झइ मे शळीळं
अङ्गाळमज्झपडिदे विअ चम्मखण्डे ॥ ८ ॥

विटः—वसन्तसेने!

किं त्वं भयेन परिवर्तितसौकुमार्या
नृत्तोपदेशविशदौ चरणौ क्षिपन्ती ।
उद्विग्नचञ्चलकटाक्षनिविष्टदृष्टि-
र्व्याघ्रानुसारचकिता हरिणीव यासि ॥ ९ ॥

शकारः—(क) भावे! एशा गच्छइ वशन्तशेणिआ,

दुवेहि अह्मेहि* अणुबन्धअन्ती
जहा शिगाळी विअ कुक्कुळेहि ।
शणूपुळा मेहळणादहाशा
शवेट्टणं मे हळअं हळन्ती ॥ १० ॥

---

किं यासि धावसि प्रधावसि प्रस्खलन्ती
साधु प्रसीद न मार्यसे तिष्ठ तावत् ।
कामेन सम्प्रति हि दह्यते मे शरीर-
मङ्गारमध्यपतितमिव चर्मखण्डम् ॥ ८ ॥

(क) भाव! एषा गच्छति वसन्तसेना,
द्वाभ्यामावाभ्यामनुबध्यमाना यथा सृगालीव कुक्कुराभ्याम् ।
सनूपुरा मेखलानादहासा सवेष्टनं मे हृदयं हरन्ती ॥ १० ॥

---

* हिकाराकारयोः स्थाने 'ह्य'कारः पाठ्यो भाति ।

**विटः**—वसन्तसेने !

किं त्वं पदात् पदशतानि निवेशयन्ती
नागीव यासि पतगेन्द्रभयाभिभूता ।
वेगादहं प्रचलितः पवनोपमेयः
किं त्वां ग्रहीतुमथवा न हि मेऽस्ति शक्तिः ॥ ११ ॥

**गणिका**—(समन्तादवलोक्य) (क) पळ्ळवअ ! पळ्ळवअ ! परहुदिए ! परहुदिए ! महुअरअ ! महुअरअ! सारिए! सारिए! । हद्धि, णट्ठो मे परिजणो । एत्थ सअं एव्व अप्पा रक्खिदव्वो ।

**शकारः**—(ख) विळव विळव (णाए?) विळव पळ्ळवं वा, परहुदिअं वा, महुअरं वा, शाळि(शि?)अं वा, शव्वं वशञ्चमाशं वा । के के तुमं परित्तआशि ।

कं वाशुजेवे शवपट्ट(शेण?णेशे)
कुन्तीशुदे वा जणमेजए वा ।
अहं तुमं गह्णिअ केशहत्थे
दुःशाशळे शीदमिवाहुळामि ॥ १२ ॥

---

(क) पल्लवक ! पल्लवक ! परभृतिके ! परभृतिके ! मधुकरक ! मधुकरक ! शारिके ! शारिके ! । हा धिक्, नष्टो मे परिजनः । अत्र स्वयमेवात्मा रक्षितव्यः ।

(ख) विलप विलप (णाए?) विलप पल्लवं वा, परभृतिकां वा, मधुकरं वा, शारिकां वा, सर्वं वसन्तमासं वा । कस्कस्त्वां परित्रास्यते ।

किं वासुदेवः शवपत्तनेशः कुन्तीसुतो वा जनमेजयो वा ।
अहं त्वां गृहीत्वा केशहस्ते दुःशासनः सीतामिवाहरामि ॥ १२ ॥

---

१. 'शनप' क. पाठः।

विटः——वसन्तसेने! सर्वत्र भयानभिज्ञहृदयं मां कुरु । पश्य,

परिचिततिमिरा मे शीलदोषेण रात्रि-
बहलतिमिरकालास्तीर्णपूर्वा विघट्टाः* ।
युवतिजनसमक्षं कामसेतन्न वाच्यं
विपणिषु हतशेषा रक्षिणः साक्षिणो मे ॥ १३ ॥

गणिका——(क) हं इदाणिं संसइदा संवुत्ता, †जो अप्पगुणाणि सअं एव्व मन्तेदि । कहं एदे अकय्यं ण करिस्सन्दि ।

विटः——भवति! क्रियतामस्माकमनुनयप्रग्रहः । पश्य,

जनयति खलु रोषं प्रश्रयो भिद्यमानः
किमिव च रुषितानां दुष्करं मद्विधानाम् ।
अनुनयति समर्थः खड्गदीर्घः करोऽयं
युवतिवधघृणाया मां शरीरं च रक्ष ॥ १४ ॥

गणिका——(ख) अणुणओ वि खु से भाएदि ।

---

(क) हम् इदानीं संशयिता संवृत्ता, य आत्मगुणान् स्वयमेव मन्त्रयते । कथमेतेऽकार्यं न करिष्यन्ति ।

(ख) अनुनयोऽपि खल्वस्य भाययति ।

---

* विघट्टा विमार्गा इत्यर्थः । † 'जो' इत्यस्य प्रतिनिर्देश्यं तेनेति हेतुतृतीयान्तं संशयितापदेन योज्यम् ।

**शकारः**—(क) वशन्तशेणिए! शुट्ठु भावे भणाशि। बहुमण्णिअदि खु दाव बळिअजणदुल्ळहे अणुणए। पेक्ख वाशु!

अशि क्खु तीक्खे शिहिग्गीवमेअए
खिवेमि शीशं तव माळए हवा।
अळं तु अह्माळिशकाणि ळोशिअ
मडे खु जो होइ ण णाम जीवइ॥ १५॥

**गणिका**—(ख) अय्य! कुळउत्तजणस्स सीळपरितोसोवजीविणी गणिआ खु अहं।

**विटः**—अतः खलु प्रार्थ्यसे।

**गणिका**—(ग) अय्य! इमादो जणादो किं इच्छीअदि सरीरं वा आदु अळङ्कारो वा।

**विटः**—न पुष्पमोक्षणमर्हति लता। कृतमलङ्कारेण।

---

(क) वसन्तसेने! सुष्ठु भावो भणति। बहुमान्यते खलु तावद् बलवज्जनदुर्लभोऽनुनयः। पश्य वासु!

असिः खलु तीक्ष्णः शिखिग्रीवामेचकः क्षिपामि शीर्षं तव मारयेऽथवा।
अलं त्वस्मादृशकान् रोषयित्वा मृतः खलु यो भवति न नाम जीवति॥ १५॥

(ख) आर्य! कुलपुत्रजनस्य शीलपरितोषोपजीविनी गणिका खल्वहम्।

(ग) आर्य! अस्माज्जनात् किमिष्यते शरीरं वाथवालङ्कारो वा।

---

१. 'क्षम' ख. पाठः.

**गणिका**—(क) अहं खु दाणि अत्ताणं ण सन्दावेअं।

**शकारः**—(ख) वशन्तशेणिए! अहं भट्टिपुत्ते काम-इदव्वे।

**गणिका**—(ग) सन्तो सि।

**शकारः**—(घ) शुणाहि भावे! शुणाहि। एशा वशन्त-शेणिआ मं शन्तो शि त्ति भणादि।

**विटः**—(आत्मगतम्) आक्रुष्टमात्मानं न जानाति मूर्खः। ध्वंस इत्युक्ते श्रान्त इत्यवगच्छति। अपिच,

अभिनयति वचांसि सर्वगात्रैः
किमपि किमप्यनवेक्षितार्थमाह।
अनुचितगतिरप्रगल्भवाक्यः
पुरुषमयस्य पशोर्नवावतारः॥ १६॥

(प्रकाशम्) वसन्तसेने! किमिदं मत्सन्निधौ वेशवासविरुद्धमभि-हितम्। पश्य,

तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव।

---

(क) अहं खल्विदानीमात्मानं न सन्तापयेयम्।

(ख) वसन्तसेने! अहं भर्तृपुत्रः कामयितव्यः।

(ग) शान्तोऽसि।

(घ) शृणु भाव! शृणु। एषा वसन्तसेना मां श्रान्तोऽसीति भणति।

वहसि हि धनहार्यं पण्यभूतं शरीरं
समसुपचर भद्रे! सुप्रियं चाप्रियं च ॥ १७ ॥

**गणिका—** (क) एसो मे अभिणिवेसो अभिजणेण तुळीअदि।

**शकारः—** (ख) भावे! एशा अन्धआळपूळिशगम्भीळा ळच्छा दीशइ। मा खु (णाए?) एत्थ भंशइदव्वा। आ कामदेवाणुआणप्पहुदि णअणमत्तशत्थुळं दळिद्दशत्थवाहवुत्तं चाळुदत्तवडुअं कामेदि एशा। इदं तश्श गेहश्श पक्खदुवाळं।

**गणिका—** (सहर्षमात्मगतम्) (ग) एदं तस्स गेहं। दिट्ठिआ दाणिं अमित्तजणणिरोहेण पिअजणसमीवं उवणीदह्मि। भोदु, एवं दाव करिस्सं। (अपसरति।)

**शकारः—** (विलोक्य) (घ) भावे! णट्ठा (णाए?) णट्ठा।

**विटः—** कथं नष्टा। अन्विष्यतामन्विष्यताम्।

**शकारः—** (ङ) भावे! ण दिश्शदि।

---

(क) एष मेऽभिनिवेशोऽभिजनेन तोल्यते।

(ख) भाव! एषान्धकारपूरितगम्भीरा रथ्या दृश्यते। मा खलु (णाए?) अत्र भ्रंशयितव्या। आ कामदेवानुयानप्रभृति नयनमात्रसंस्थुलं दरिद्रसार्थवाहपुत्रं चारुदत्तवटुकं कामयत एषा। इदं तस्य गृहस्य पक्षद्वारम्।

(ग) एतत् तस्य गेहम्। दिष्ट्येदानीममित्रजननिरोधेन प्रियजनसमीपमुपनीतास्मि। भवतु, एवं तावत् करिष्यामि।

(घ) भाव! नष्टा (णाए?) नष्टा।

(ङ) भाव! न दृश्यते।

विटः—हन्त वञ्चिताः स्मः । वसन्तसेने ! उपलब्धेदानीमसि ।

कामं प्रदोषतिमिरेण (न) दृश्यसे त्वं
सौदामनीव जलदोदरसन्निरुद्धा ।
त्वां सूचयिष्यति हि वायुवशोपनीतो
गन्धश्च शब्दमुखराणि च भूषणानि ॥ १८ ॥

(गणिका मालामपनीय भूषणानि चोत्सारयति ।)

विटः—अहो बलवांश्चायमन्धकारः । सम्प्रति हि,

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १९ ॥

अपिच,

सुलभशरणमाश्रयो भयानां
वनगहनं तिमिरं च तुल्यमेव ।
उभयमपि हि *रक्षतेऽन्धकारो
जनयति यश्च भयानि यश्च भीतः ॥ २० ॥

तथाहि—

आलोकविशाला मे
सहसा तिमिरप्रवेशसञ्छन्ना ।
उन्मीलितापि दृष्टि-
र्निमीलितेवान्धकारेण ॥ २१ ॥

* परस्मैपदमपेक्षितम् ।

**गणिका**—(क) अम्महे भित्तिपरिणामसूइदं पक्खदुवाळं। असम्भोअमळिणदाए इह अहिअं अन्धआरो। ता इह एव्व चिट्ठिस्सं। (स्थिता।)

**नायकः**—मैत्रेय! गच्छ, चतुष्पथे बलिमुपहर मातृभ्यः।

**विदूषकः**—(ख) ण मे सद्धा, अण्णो गच्छदु।

**नायकः**—किमर्थम्।

**विदूषकः**—(ग) मम बुद्धी आदंसमण्डळगआ विअ छाआ वामेसु दक्खिणा दक्खिणेसु वामा होइ।

**नायकः**—मूर्ख! यथाविभवेनार्च्यताम्। भक्त्या तुष्यन्ति[1] दैवतानि। तद् गम्यताम्।

**विदूषकः**—(घ) एआई अहं कहं गमिस्सं।

**नायकः**—रदनिके! अनुगच्छात्रभवन्तम्।

---

(क) अहो भित्तिपरिणामसूचितं पक्षद्वारम्। असम्भोगमलिनतयेहाधिकमन्धकारः। तद् इहैव स्थास्यामि।

(ख) न मे श्रद्धा, अन्यो गच्छतु।

(ग) मम बुद्धिरादर्शमण्डलगतेवच्छाया वामेषु दक्षिणा दक्षिणेषु वामा भवति।

(घ) एकाक्यहं कथं गमिष्यामि।

---

१. 'न्ति·सर्वदै' ख. पाठः.

रदनिका — (क) जं भट्टा आणवेदि ।

विदूषकः — (ख) भोदि ! दीवं अहं णइस्सं ।

नायकः — यथा भवान् मन्यते, तथास्तु ।

विदूषकः — (दीपं गृहीत्वा) (ग) भो रदणिए! अवावुद पक्ख-दुवाळं[1] ।

रदनिका — (घ) तह । (नाट्येन द्वारमपावृणोति ।)

(गणिका वस्त्रान्तेन दीपं निर्वापयति ।)

विदूषकः — (ङ) अविहा अविहा ।

नायकः — वयस्य ! किमेतत् ।

विदूषकः — (च) अवावुदपक्खदुवारपिण्डीकिदप्पविट्ठेण राअमग्गसङ्किण्णेण वादेण सहसा णिग्गच्छन्तस्स मम हत्थे णिवावुदो दीवो ।

---

(क) यद् भर्ताज्ञापयति ।

(ख) भवति! दीपमहं नेष्यामि ।

(ग) भो रदानिके! अपावृणु पक्षद्वारम् ।

(घ) तथा ।

(ङ) अविहाविहा ।

(च) अपावृतपक्षद्वारपिण्डीकृतप्रविष्टेन राजमार्गसङ्कीर्णेन वातेन सहसा निर्गच्छतो मम हस्ते निर्वापितो दीपः ।

---

१. 'रं' ख. पाठः.

नायकः — मूर्ख! धिक् त्वाम् ।

विदूषकः — (क) अप्पं खु मे अवरद्धं । रदणिए! गच्छ, चउप्पहे मं पडिवाळेहि । जाव अहं वि अब्भन्तरचउस्साळादो दीवं गह्णिअ आअच्छामि । (निष्क्रान्तः ।)

चेटी — (ख) अय्य ! तह । (परिक्रामति ।)

गणिका — (ग) दिट्ठिआ मम प्पवेसणिमित्तं अवावुदं पक्खदुवाळं । अळं चारित्तभएण । जाव पविसामि । (अभ्यन्तरं प्रविश्य तिष्ठति ।)

विटः — (विलोक्यात्मगतम्) भवनान्निर्गत्य काचिदियमाग-च्छति । भवत्वनया वराकं वञ्चयामि । (प्रकाशम्) सुरभिस्नान-धूपानुविद्ध इव गन्धः ।

शकारः — (घ) आम भावे! शुणामि गन्धं शवणेहिं । अन्धआळपूळिदेहिं णाशापुडेहिं शुट्ठु ण पेक्खामि ।

विटः — तिष्ठ तिष्ठ । क यास्यसि । (चेटीं गृह्णाति ।)

(चेटी सभयं भूमौ पतिता ।)

---

(क) अल्पं खलु मेऽपराद्धम् । रदनिके! गच्छ, चतुष्पथे मां प्रतिपालय यावदहमप्यभ्यन्तरचतुश्शालाद् दीपं गृहीत्वागच्छामि ।

(ख) आर्य! तथा ।

(ग) दिष्ट्या मम प्रवेशनिमित्तमपावृतं पक्षद्वारम् । अलं चारित्रभयेन । यावत् प्रविशामि ।

(घ) आम भाव! शृणोमि गन्धं श्रवणाभ्याम् । अन्धकारपूरिताभ्यां नासापुटाभ्यां सुष्ठु न पश्यामि ।

शकारः — (क) गह्ण भावे! गह्ण ।

विटः —

एषा हि वयसो दर्पात् कुलपुत्रावमानिनी ।
केशेषु कुसुमन्यासैः सेवितव्येषु धर्षिता ॥ २२ ॥

शकारः — (ख) भावे! किं गहीदा ।

विटः — अथकिम् । एषा गन्धानुसारेण गृहीता ।

शकारः — (ग) दाशीएपुत्तीए शीशं दाव छिन्दिअ पच्चा माळइश्शं ।

विटः — गृह्यतां तावत् ।

शकारः — (चेटीं गृहीत्वा)

(घ) एशा हि वाशू शिळशि ग्गहीदा
केशेशु वाळेशु शिळोळुहेशु ।
कूजाहि कन्दाहि ळवाहि वात्तं
महेश्शळं शङ्कळमिश्शळं वा ॥ २३ ॥

(चेटीं बलादाकर्षति ।)

---

(क) गृहाण भाव! गृहाण ।

(ख) भाव! किं गृहीता ।

(ग) दास्याःपुत्र्याः शीर्षं तावच्छित्त्वा पश्चान्मारयिष्यामि ।

(घ) एषा हि वासूः शिरसि गृहीता केशेषु वालेषु शिरोरुहेषु ।
कूज क्रन्द लप वार्तं महेश्वरं शङ्करमीश्वरं वा ॥ २३ ॥

**चेटी** — (क) किं अय्यमिस्सेहि ववसिदं ।

**शकारः** — (ख) भावे ! जाणामि शळयोगेण ण होइ वशन्नशेणिआ ।

**विटः** — न मोक्तव्या वसन्तसेनैवैषा ।

एषा रङ्गप्रवेशेन कलानां चैव शिक्षया ।
स्वरान्तरेण दक्षा हि व्याहर्तुं तन्न मुच्यताम् ॥ २४ ॥

(प्रविश्य)

**विदूषकः** — (दीपं गृहीत्वा) (ग) राअमग्गसङ्किण्णेण सीअसुउमारेण वादेण पदे पदे विक्खोहिअमाणतरङ्गतेळपुण्णभाअणं दीवं कहं वि रक्खिअ गह्निअ आअदो ह्मि ।

**चेटी** — (शकारं पादेन ताडयन्ती रुदित्वा) (घ) अय्य ! मेत्तेअ ! अयं परिभवो, आदु अवळेवो ।

**विदूषकः** — (ङ) मा दाव मा दाव । (सखङ्गं विटं शकारं च दृष्ट्वा शङ्कितस्तिष्ठति ।)

---

(क) किमार्यमिश्रैर्व्यवसितम् ।

(ख) भाव! जानामि स्वरयोगेन न भवति वसन्तसेना ।

(ग) राजमार्गसङ्कीर्णेन शीतसुकुमारेण वातेन पदे पदे विक्षोभ्यमाणतरङ्गतैलपूर्णभाजनं दीपं कथमपि रक्षित्वा गृहीत्वागतोऽस्मि ।

(घ) आर्य! मैत्रेय! अयं परिभवोऽथवावलेपः ।

(ङ) मा तावद् मा तावत् ।

---

१. 'णजणिअत' ख. पाठः.

6289.

विटः—अये आर्यचारुदत्तस्य वयस्यो मैत्रेयः खल्वयम् । नेयमपि वसन्तसेना । महाब्राह्मण! अन्यशङ्कया खल्विदमस्माभिरनुष्ठितं, न दर्पात् । पश्यतु भवान्,

अकामा ह्रियतेऽस्माभिः काचित् स्वाधीनयौवना ।
सा भ्रष्टा शङ्कया तस्याः प्राप्तेयं शीलवञ्चना ॥ २५ ॥

शकारः—(क) अविहा दलिद्दशत्थवाहपुत्तश्श चालुदत्तवडुअश्श चेडी खु इअं, ण होइ वशन्तशेणिआ । शाहु, वशन्तशेणिए! शाहु । अन्धआलं कलिअ अन्तला वञ्चिदे भावे । अहके[1] दाव वञ्चिदे कूडकावडशीलए । शौवहा दुक्खडे कडे ।

विदूषकः—(ख) मा दाव । ण जुत्तमिदं ।

विटः—भो महाब्राह्मण ! अयमनुनयसर्वस्वमञ्जलिः ।

विदूषकः—(ग) भोदु भोदु । अणवरद्धो भवं । अणुणीदो अहं एव्व एत्थ अवरद्धो ।

---

(क) अविहा दरिद्रसार्थवाहपुत्रस्य चारुदत्तवटुकस्य चेटी खल्वियं, न भवति वसन्तसेना । साधु वसन्तसेने! साधु । अन्धकारं कृत्वान्तरा वञ्चितो भावः । अहं तावद् वञ्चितः कूटकापटशीलया । सर्वथा दुष्करं कृतम् ।

(ख) मा तावत् । न युक्तमिदम् ।

(ग) भवतु भवतु । अनपराद्धो भवान् । अनुनीतोऽहमेवात्रापराद्धः ।

---

१. 'के चापि भंशिदे' ख. पाठः.

शकारः—(क) भावे! दिढं खु भाआशि †तं दलिद्दशत्थवाहपुत्तं चालुदत्तवडुअं।

विटः—सत्यं भीतोऽस्मि।

शकारः—(ख) किश्श भावे! किश्श।

विटः—तस्य गुणेभ्यः। पश्यतु भवान्,

स मद्विधानां प्रणयैः कृशीकृतो
न तस्य कश्चिद् विभवैरसण्डितः।
निदाघसंशुष्क इव ह्रदो महान्
नृणां तु तृष्णामपनीय शुष्यति॥ २६॥

महाब्राह्मण! अयमर्थः सार्थवाहपुत्रस्य न कथयितव्यः।

(निष्क्रान्तो विटः।)

शकारः—(ग) मालिश! वडुअ! मालिश! भणेहि तं दलिद्दशत्थवाहपुत्तं चालुदत्तवडुअं मम वअणेण—लाअशाले शण्ठाणे शवट्टेण शीशेण अणुवन्ध भणादि—णाडअइत्थिआ वशन्तशेणिआ णाम गणिआदारिआ शुवण्णवण्णा दुवेहि

(क) भाव! दृढं खलु विभेषि तं दरिद्रसार्थवाहपुत्रं चारुदत्तवटुकम्।

(ख) कस्माद् भाव! कस्माद्।

(ग) मारिष! वटुक! मारिष! भण तं दरिद्रसार्थवाहपुत्रं चारुदत्तवटुकं मम वचनेन—राजस्यालः संस्थानकः सपट्टेन शीर्षेणानुवन्ध भणति—नाटकस्त्री वसन्तसेना नाम गणिकादारिका सुवर्णवर्णा द्वाभ्यामावाभ्यां बलात्कारेण

† 'उद्दिसिअ' इति शेषः।

अम्मेहि बळक्कारेण णीअमाणा[1] महन्तेण शुवण्णाळङ्कारेण तव गेहं पविट्ठा। शा शुवे णिय्याअइदव्वा। मा दाव तव अ मम अ दाळुणो खोहो होदि त्ति। वडुअ! माळिश! इदं च भणाहि—मा दाशीएपुत्त! वारावदगळप्पविट्ठं विअ मूळकन्दं शीशकवाळं मडमडाइश्शं। मा खु कवाडशम्पुडप्पविट्ठं विअ पक्ककवित्थं शीशं दे चुण्णचुण्णं मडमडाइश्शं ति।

**विदूषकः**—(क) भो! तह। (शकारं दीपेनोद्वेजयति।)

**शकारः**—(सर्वतो विलोक्य) (ख) कहिं भावे। गदे भावे। अविहा भावे!।

(निष्क्रान्तः शकारः।)

**विदूषकः**—(ग) किदं देवकय्यं ति तत्तहोदो णिवेदइस्सामो। भोदि! अवणीअदु दे हिअअमण्णू। अअं वुत्तन्तो अब्भन्तरं ण पेसिदव्वो।

---

नीयमाना महता सुवर्णालङ्कारेण तव गेहं प्रविष्टा। सा श्वो निर्यातयितव्या। मा तावत् तव च मम च दारुणः क्षोभो भवतीति। वटुक! मारिष! इदं च भण—मा दास्याःपुत्र! पारावतगलप्रविष्टमिव मूलकन्दं शीर्षकपालं मडमडायिष्ये। मा खलु कवाटसम्पुटप्रविष्टमिव पक्ककपित्थं शीर्षं ते चूर्णचूर्णं मडमडायिष्ये इति।

(क) भोः! तथा।

(ख) क्व भावः। गतो भावः। अविहा भाव!।

(ग) कृतं देवकार्यमिति तत्रभवतो निवेदयिष्यावः। भवति! अपनीयतां ते हृदयमन्युः। अयं वृत्तान्तोऽभ्यन्तरं न प्रेषयितव्यः।

---

१. 'णीआअ' क पाठः.

**चेटी**—(क) अय्य! रदणिआ खु अहं।

**विदूषकः**—(ख) एहि गच्छामो।

(उभौ परिक्रामतः।)

**नायकः**—भद्रे! कृतं देवकार्यम्।

**गणिका**—(आत्मगतम्) (ग) परिजणत्ति मं सद्दावेदि। भोदु, रक्खिदह्मि।

**नायकः**—मारुताभिलाषी प्रदोषः। तद् गृह्यतां प्रावारकम्।

**गणिका**—(प्रावारकं गृहीत्वा सहर्षम्) (घ) अणुदासीणं जोव्वणं से पडवासगन्धो सूएदि।[1]

**नायकः**—रदनिके! प्रवेश्यतामभ्यन्तरचतुःशालम्।

**गणिका**—(आत्मगतम्) (ङ) अभाइणी अहं अब्भन्तरप्पवेसस्स।

**नायकः**—किमिदानीं न प्रविशसि।

---

(क) आर्य! रदनिका खल्वहम्।

(ख) एहि गच्छावः।

(ग) परिजन इति मां शब्दापयति। भवतु, रक्षितास्मि।

(घ) अनुदासीनं यौवनमस्य पटवासगन्धः सूचयति।

(ङ) अभागिन्यहमभ्यन्तरप्रवेशस्य।

---

१. व्व ख. पाठः.

**गणिका** — (क) इदाणिं अहं किं भणिस्सं ।

**नायकः** — रदनिके ! किं विलम्बसे ।

(रदनिकाविदूषकावुपसृत्य)

**चेटी** — (ख) भट्टिदारअ ! इअ ह्मि ।

**नायकः** — इयमिदानीं का ।

अविज्ञातप्रयुक्तेन धर्षिता मम वाससा ।
संवृता शरदभ्रेण चन्द्रलेखेव शोभते ॥ २७ ॥

**गणिका** — (आत्मगतम्) (ग) दीवालोअसूइदरूवो[1] सो एव्व दाणि एसो, जस्स किदे[2] अहं णिस्सासमत्तलक्खिदं सरीरं उव्वहामि ।

**विदूषकः** — (घ) भो चारुदत्त ! राअसालो सण्ठाणो सवट्टेण सीसेण[3] अणुवन्दिअ विण्णवेदि — णाडअइत्थिआ वसन्तसेणिआ[4] णाम गणिआदारिआ अह्मेहि बलक्कारेण णीअमाणा

---

(क) इदानीमहं किं भणिष्यामि ।

(ख) भर्तृदारक ! इयमस्मि ।

(ग) दीपालोकसूचितरूपः स एवेदानीमेषः, यस्य कृतेऽहं निःश्वासमात्रलक्षितं शरीरमुद्वहामि ।

(घ) भोः चारुदत्त ! राजस्यालः संस्थानः सपट्टेन शीर्षेणानुवन्द्य विज्ञापयति — नाटकस्त्री वसन्तसेना नाम गणिकादारिकास्माभिर्बलात्कारेण नीयमाना

---

१. 'रुव्वोसो' क. पाठः. २. 'दे णि' ख. पाठः. ३. 'ण व' क. पाठः. ४. 'णा णा' ख. पाठः.

महन्तेण सुवण्णाळङ्कारेण तुह्माणं गेहं पविट्ठा । सा सुवे णिय्याअइदव्वत्ति ।

**गणिका**—(क) हं बळक्कारेण णीअमाणत्ति[१] णं भणादि । भोदु, अअं पत्तकाळो । (प्रकाशम्) अय्य ! सरणागदह्मि ।

**नायकः**—न भेतव्यं न भेतव्यम् । किं वसन्तसेनैषा ।

**विदूषकः**—(ख) अविहा वसन्तसेणा । (क इव ?) । (अपवार्य) भो चारुदत्त ! वसन्तसेणा खु इअं, जा भवदा कामदेवाणुआणप्पहुदि णअणमत्तसंत्थुदा सण्णिहिदमणोभवेण हिअएण उव्वहीअदि । ता पेक्खदु इअं[२] ।

**नायकः**—वयस्य ! पश्याम्येनां,

यत्र मे पतितः कामः क्षीणे विभवविस्तरे[३] ।
रोषः कुपुरुषस्येव स्वाङ्गेष्वेवावसीदति ॥ २८ ॥

---

महता सुवर्णालङ्कारेण युष्माकं गेहं प्रविष्टा । सा श्वो निर्यातयितव्येति ।

(क) हं बलात्कारेण नीयमानेति ननु भणति । भवतु, अयं प्राप्तकालः । आर्य ! शरणागतास्मि ।

(ख) अविहा वसन्तसेना । (क इव ?) । भोः चारुदत्त ! वसन्तसेना खल्वियं, या भवता कामदेवानुयानप्रभृति नयनमात्रसंस्तुता सन्निहितमनोभवेन हृदयेनोदुह्यते । तत् पश्यत्विमाम् ।

---

१. 'त्ति मं भ' क. पाठः. २. 'अं', ३. 'सञ्चये ।' ख. पाठः.

गणिका — (क) अदिण्णभूमिप्पवेसपधरिसणेण[1] अवरद्धा अहं अय्यं सीसेण पसादेमि।

नायकः — यद्येवमहमपि तावदविज्ञातप्रयुक्तेन[2] प्रेष्यसमुदाचारेण सापराधो भवतीं प्रसादयामि ।

विदूषकः — (ख) भो ! विवहन्ता इव सअडिअं दुव्विणीदबळीवद्दा अण्णोण्णं सङ्क्लिळेसन्ति। अहं दाणि कं पसादेमि। भोदु,[3] दाणि रदणिअं पसादेमि[4] । रदणिए! पसीददु पसीददु होदी।

नायकः[5] — भवति ! परवानस्मि । किमनुतिष्ठति स्नेहः ।

गणिका — (आत्मगतम्) (ग) महुरं खु इच्छिदव्वं । अदक्खिणं खु पढमदंसणे[6] जइच्छागदाए इह वसिदुं । ता एवं करिस्सं । (प्रकाशम्) जइ मे अय्यो पसण्णो, अअं मे अळङ्कारो इह एव्व चिट्ठदु । अँळङ्कारणिमित्तं पावा मं अणुसरन्ति । अहं पि अय्येण रक्खिदा गेहं गन्तुमिच्छामि ।

---

(क) अदत्तभूमिप्रवेशप्रधर्षणेनापराद्धाहमार्यं शीर्षेण प्रसादयामि ।

(ख) भोः ! विवहन्ताविव शकटिकां दुर्विनीतबलीवर्दावन्योन्यं संक्लिश्येते । अहमिदानीं कं प्रसादयामि । भवतु , इदानीं रदनिकां प्रसादयामि । रदनिके ! प्रसीदतु प्रसीदतु भवती ।

(ग) मधुरं खल्वेष्टव्यम् । अदक्षिणं खलु प्रथमदर्शने यदृच्छागतयेह वस्तुम् । तदेवं करिष्यामि। यदि मे आर्यः प्रसन्नः, अयं मेऽलङ्कार इहैव तिष्ठतु। अलङ्कारानिमित्तं पापा मामनुसरन्ति । अहमप्यार्येण रक्षिता गेहं गन्तुमिच्छामि ।

---

१. 'सधरिसिदेण', २. 'दज्ञा' क. पाठः, ३. भो! र', ४. 'मि । प', ५. 'कः— प', ६. 'ट', ७. 'एदण्णिमि' ख. पाठः.

**नायकः**—अन्वर्थमुपदिशति । मैत्रेय ! गृह्यताम् ।

**विदूषकः**—(क) ण मे सद्धा ।

**नायकः**—मूर्ख ! गृह्यताम् ।

**विदूषकः**—(ख) जं भवं आणवेदि । आणेदु भोदी[1] ।

(गणिका विमुच्यालङ्कारं प्रयच्छति ।)

**विदूषकः**—(गृहीत्वा) (ग) रदणिए ! गह्ण एदं सुवण्णालङ्कारं तुवं । सट्ठीए सत्तमीए अ धारेहि । अहं अट्ठमीए अणज्झाए[2] धारइस्सं ।

**चेटी**—(विहस्य) (घ) सत्थं वक्खाणअन्तस्स भट्टिपुत्तस्स तदाणिं अवसरो होदि । आणेदु अय्यो । (गृहीत्वा निष्क्रान्ता ।)

**नायकः**—कोऽत्र भोः ! । दीपिका तावत् ।

**विदूषकः**—(ङ) भो ! दीविआ गणिआ विअ णिस्सिणेहा संवुत्ता ।

---

(क) न मे श्रद्धा ।

(ख) यद् भवानाज्ञापयति । आनयतु भवती ।

(ग) रदनिके! गृहाणैतं सुवर्णालङ्कारं त्वम् । षष्ठ्यां सप्तम्यां च धारय । अहमष्टम्यामनध्याये धारयिष्यामि ।

(घ) शास्त्रं व्याचक्षाणस्य भर्तृपुत्रस्य तदानीमवसरो भवति । आनयत्वार्यः ।

(ङ) भोः! दीपिका गणिकेव निःस्नेहा संवृत्ता ।

---

१. 'हो', २. 'ज्झा' ख. पाठः.

नायकः—कृतं दीपिकया । (विलोक्य) उदितो[1] भगवान् सर्वजनसामान्यप्रदीपश्चन्द्रः[2] । अतः खलु,

उदयति हि शशाङ्कः क्लिन्नखर्जूरपाण्डु-
युवतिजनसहायो राजमार्गप्रदीपः ।
तिमिरनिचयमध्ये रश्मयो यस्य गौरा
हृतजल इव पङ्के क्षीरधाराः पतन्ति ॥ २९ ॥

भवति! राजमार्गे[3] निष्क्रमणः* क्रियताम् । सखे! अनुगच्छात्रभवतीम् ।

विदूषकः—(क) जं भवं आणवेदि । एदु एदु भोदी[4] ।

(निष्क्रान्ताः सर्वे ।)

प्रथमोऽङ्कः ।

---

(क) यद् भवानाज्ञापयति । एत्वेतु भवती ।

---

१. 'तः खलु भ'. २. 'न्द्रमाः ।', ३. 'र्गनि', ४. 'हो' ख. पाठः.

---

* निष्क्रमणमिति क्लीबत्वं युक्तम् । अथवा 'कोऽसावनुमानः' 'इतिकरणः क्रियते' इति महाभाष्यप्रयोगवत् पुंस्त्वं स्यात् ।

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति गणिका चेटी च ।)

**गणिका** — (क) तदो तदो ।

**चेटी** — (ख) अम्महे ण किञ्चि मए भणिदं[1] । किं तदो तदो त्ति ।

**गणिका** — (ग) हञ्जे ! किं मए मन्तिदं ।

**चेटी** — (घ) अज्जुए ! सिणेहो पुच्छदि, ण पुरोभा(अ ?इ) दाए* । किं चिन्तीअदि ।

**गणिका** — (ङ) हञ्जे ! तुमं दाव किं त्ति तक्केसि ।

---

(क) ततस्ततः ।

(ख) अम्महे न किञ्चिन्मया भणितम् । किं ततस्तत इति ।

(ग) हञ्जे! किं मया मन्त्रितम् ।

(घ) अज्जुके! स्नेहः पृच्छति, न पुरोभागितया । किं चिन्त्यते ।

(ङ) हञ्जे! त्वं तावत् किमिति तर्कयसि ।

---

१. 'अं' ख. पाठः.

---

* 'पुरोभाइदा' इति प्रथमान्तं ह्यम् ।

चेटी — (क) अप्पओअणदाए[1] गणिआभावस्स अज्जुआ कं पि कामेदि त्ति तक्केमि ।

गणिका — (ख) सुट्ठु तुए किदं* । अवञ्चिदा दे दिट्ठी । ईदिसवण्णय्येव$ ।

चेटी — (ग) अणळंकिदं पि अज्जुअं मण्डिदं विअ पेक्खामि । कामो हि भअवं अणवगीदो ऊसुवो तरुणजणस्स ।

गणिका — (घ) हदासे ! उक्कण्ठिदव्वे का दे रदी ।

चेटी — (ङ) अज्जुए ! इच्छामि पुच्छिदुं बहुमाणो(वि ?-इ)अरमणीओ कोच्चि राअकुमारो ।

गणिका — (च) रमिदुं इच्छामि, ण सेविदुं ।

---

(क) अप्रयोजनतया गणिकाभावस्याज्जुका कमपि कामयते इति तर्कयामि ।

(ख) सुष्ठु त्वया कृतम् । अवञ्चिता ते दृष्टिः । ईदृशवर्णैव ।

(ग) अनलङ्कृतामप्यज्जुकां मण्डितामिव पश्यामि । कामो हि भगवाननवगीत उत्सवस्तरुणजनस्य ।

(घ) हताशे! उत्कण्ठितव्ये का ते रतिः ।

(ङ) अज्जुके! इच्छामि प्रष्टुं बहुमानोचितरमणीयः कश्चिद् राजकुमारः ।

(च) रन्तुमिच्छामि, न सेवितुम् ।

---

१. 'एक्कप्प' ख॰ पाठः॰

---

* 'तक्किदं' इति स्यात् । $ ईदृशो वर्णः प्रकारो यस्याः सैवाहमित्यर्थः ।

**चेटी**—(क) किण्णुखु विज्जाविसेसरमणीओ को(च्चि) बह्मणदारओ ।

**गणिका**—(ख) अत्थि अदिबहुमदो विस्संभो । पूअणीओ खु सो जणो ।

**चेटी**—(ग) किण्णुहु वणिजंदारओ कोच्चि आगन्तुओ ।

**गणिका**—(घ) उम्मत्तिए ! आसाच्छेदं उक्कण्ठन्ता का सहेदि ।

**चेटी**—(ङ) किं ण सक्कं सोदुं । को अह्माणं मणोरहा-उत्तो ।

**गणिका**—(च) किं तुवं कामदेवाणुयाणे ण आअदा सि ।

**चेटी**—(छ) णं आअदह्मि ।

**गणिका**—(ज) केण उदासीणं मन्तेसि ।

---

(क) किन्नुखलु विद्याविशेषरमणीयः कश्चिद् ब्राह्मणदारकः ।

(ख) अस्त्यतिबहुमतो विस्रम्भः । पूजनीयः खलु स जनः ।

(ग) किन्नुखलु वणिग्दारकः कश्चिदागन्तुकः ।

(घ) उन्मत्तिके ! आशाच्छेदमुत्कण्ठमाना का सहते ।

(ङ) किं न शक्यं श्रोतुम् । कोऽस्माकं मनोरथावुत्तः ।

(च) किं त्वं कामदेवानुयाने नागतासि ।

(छ) नन्वागतास्मि ।

(ज) केनोदासीनं मन्त्रयसे ।

---

१. 'ज्ज' क. पाठः. २. 'अ' ख. पाठः.

चेटी— (क) भणादु भणादु अज्जुआ भणादु ।

गणिका — (ख) हञ्जे! सुणाहि दाव । अत्थि सत्थवाहपुत्तो चारुदत्तो णाम ।

चेटी[1] — (ग) जेण सरणागदा तुवं रक्खिदा ।

गणिका — (घ) सो एव्व ।

चेटी — (ङ) हद्धि, दरिद्दो खु सो ।

गणिका — (च) अदो खु कामीअदि[2] । अदिदरिद्दपुरुस[3]-सत्ता गणिआ अवअणीआ होइ ।

चेटी — (छ) अज्जुए! उद्धूदपुप्फं सहआरं महुअराओ उवासन्ति ।

गणिका — (ज) हञ्जे! एवं उवासन्ति । दे महुअरा त्ति(पुच्छीअन्ति?) ।

---

(क) भणतु भणत्वज्जुका भणतु ।

(ख) हञ्जे! शृणु तावत् । अस्ति सार्थवाहपुत्रश्चारुदत्तो नाम ।

(ग) येन शरणागता त्वं रक्षिता ।

(घ) स एव ।

(ङ) हा धिक्, दरिद्रः खलु सः ।

(च) अतः खलु काम्यते । अतिदरिद्रपुरुषसक्ता गणिका अवचनीया भवति ।

(छ) अज्जुके! उद्धूतपुष्पं सहकारं मधुकरा उपासते । deprived of blossoms

(ज) हञ्जे! एवमुपासते । ते मधुकरा इति (पुच्छीअन्ति?) ।

---

१. 'टी—अज्जुए! जे', २. 'दि। द'., ३. 'रि' ख. पाठः.

चेटी — (क) किं, विहवमन्ददाए वेसवासप्पसङ्गकादरो दुक्खं त्ति जइ ण आअच्छे ।

गणिका — (ख) णं अहं तं कामेमि ।

चेटी — (ग) जइ एत्तओ बहुमाणो, किं णाभिसरीअदि

गणिका — (घ) ण हु ण गच्छामि । किन्तु सहसा अभिसरिदो पच्चुअआरदुळ्ळभदाए पुणो मे दुळ्ळभो भवे त्ति विळम्बेमि ।

चेटी[1] — (ङ) हं, किं एतण्णिमित्तं तहिं एव्व सो अळङ्कारो ट्ठाविदो ।

गणिका — (च) ईदिसं एव्व ।

(ततः प्रविशत्यपटाक्षेपेण संवाहकः ।)

संवाहकः — (छ) अय्ये! सरणागदो ह्मि ।

---

(क) किं, विभवमन्दतया वेशवासप्रसङ्गकातरो दुःखमिति यदि नागच्छेत् ।

(ख) नन्वहं तं कामये ।

(ग) यद्येतावान् बहुमानः, किं नाभिस्रियते ।

(घ) न खलु न गच्छामि । किन्तु सहसाभिसृतः प्रत्युपकारदुर्लभतया पुनर्मे दुर्लभो भवेदिति विलम्बे ।

(ङ) हं, किमेतन्निमित्तं तत्रैव सोऽलङ्कारः स्थापितः ।

(च) ईदृशमेव ।

(छ) आर्ये! शरणागतोऽस्मि ।

---

१. 'टी–किं' ख. पाठः. 2 timid 3 an ornate 4 love 5 [illegible] 6 good turn 6 hesitate

**गणिका** -- (क) अळं अय्यस्स सम्भमेण ।

**चेटी** -- (ख) हं, को दाणि एसो ।

**गणिका** -- (ग) उम्मत्तिए ! किं सरणाअदो पुच्छीअदि ।

**चेटी** -- (घ) अविणाम साहसिओ भवे ।

**गणिका** -- (ङ) उम्मत्तिए ! गुणवन्तो रक्खिदव्वो होदि ।

**संवाहकः** -- (च) अय्ये ! णं भएण उवआरो विस्सरिदो, ण परिभवेण । पेक्खदु अय्या, भीदाह वा पधरिसिदाह वा आवण्णाह वा सुळभचारित्तवञ्चणाह वा अवराहेदुं समत्था* होन्ति ।

**गणिका** -- (छ) भोदु भोदु । विस्सत्थो भोदु अय्यो । गणिआ खु अहं ।

**संवाहकः** -- (ज) अभिजणेण । ण सीळेण ।

---

(क) अलमार्यस्य सम्भ्रमेण ।

(ख) हं, क इदानीमेषः ।

(ग) उन्मत्तिके ! किं शरणागतः पृच्छ्यते ।

(घ) अपिनाम साहसिको भवेत् ।

(ङ) उन्मत्तिके ! गुणवान् रक्षितव्यो भवति ।

(च) आर्ये ! ननु भयेनोपचारो विस्मृतः, न परिभवेण । पश्यत्वार्या, भीता वा प्रधर्षिता वा आपन्ना वा सुलभचारित्रवञ्चना वा अपराधयितुं समर्था भवन्ति ।

(छ) भवतु भवतु । विश्वस्तो भवत्वार्यः । गणिका खल्वहम् ।

(ज) अभिजनेन । न शीलेन ।

---

* 'शक्या' इत्यर्थः । 1 fear 2 adventurous (crime) 3 good 7 come to calamity 4 faulty many

**गणिका**—(क) हञ्जे ! एवं विअ ।

**चेटी**—(ख) अज्जुआ अय्यं पुच्छदि, कुदो अय्यस्स भअं ति ।

**संवाहकः**—(ग) अय्ये ! धणिआदो ।

**गणिका**—(घ) जइ एवं, आसणं देदु अय्यस्स ।

**चेटी**—(ङ) तह । (आसनं ददाति ।)

**गणिका**—(च) उवविसदु अय्यो ।

**संवाहकः**—(छ) पूआविसेसेण जाणामि कय्यं ति । (उपविशति ।)

**गणिका**—(ज) हञ्जे! एवं विअ ।

**चेटी**—(झ) अज्जुए ! तह । अय्य ! राअमग्गे विस्सत्थसम्पादं अय्यं कादुं इच्छदि अज्जुआ । कस्स किं कत्तव्वं ।

---

(क) हञ्जे! एवमिव ।

(ख) अज्जुकार्यं पृच्छति, कुत आर्यस्य भयमिति ।

(ग) आर्ये! धनिकात् ।

(घ) यद्येवम्, आसनं दीयतामार्यस्य ।

(ङ) तथा ।

(च) उपविशत्वार्यः ।

(छ) पूजाविशेषेण जानामि कार्यमिति ।

(ज) हञ्जे! एवमिव ।

(झ) अज्जुके! तथा । आर्य! राजमार्गे विश्वस्तसम्पातमार्यं कर्तुमिच्छत्यज्जुका । कस्य किं कर्तव्यम् ।

-ones under 2 mistress

संवाहकः—(क) सुणादु अय्या ।

गणिका—(ख) अवहिदह्मि ।

संवाहकः—(ग) पाडलिपुत्तं मे जम्मभूमी। पकिदीए वणिजओ अहं । तदो भाअधेअपरिवुत्तदाए[1] दसाए संवाहअवुत्तिं उवजीवामि ।

गणिका—(घ) संवाहओ अय्यो । सुउमारा कळा सिक्खिदा अय्येण ।

संवाहकः—(ङ) कळेत्ति सिक्खिदा । आजीविअं दाणि संवुत्तम् ।

गणिका—(च) णिव्वेदसूअअं विअ वअणं अय्यस्स । तदो तदो ।

संवाहकः—(छ) अज्जुए! सो दाणि अहं आअन्तुआणं सुणिअ पुरुसविसेसकोदूहळेण आअदो ह्मि[2] इमं उज्जअणिं ।

---

(क) श्रृणोत्वार्या ।

(ख) अवहितास्मि ।

(ग) पाटलिपुत्रं मे जन्मभूमिः । प्रकृत्या वणिगहम् । ततो भागधेयपरिवृत्तया दशया संवाहकवृत्तिमुपजीवामि ।

(घ) संवाहक आर्यः । सुकुमारा कला शिक्षितार्येण ।

(ङ) कलेति शिक्षिता । आजीवितमिदानीं संवृत्तम् ।

(च) निर्वेदसूचकमिव वचनमार्यस्य । ततस्ततः ।

(छ) अज्जुके! स इदानीमहमागन्तुकानां श्रुत्वा पुरुषविशेषकौतूहलेनागतोऽस्मीमामुज्जयनीम् ।

---

१. 'त्ताए', २. 'ह्मि उ' ख. पाठः. 2 trouble

**गणिका**—(क) तदो तदो ।

**संवाहकः**—(ख) तदो इह आअदमत्त एव्व कोच्चि सत्थवाहपुत्तो समासादिदो ।

**गणिका**—(ग) केरिसो ।

**संवाहकः**—(घ) आइदिमन्तो अविब्भमन्तो अणुच्छित्तो ळळिदो ळळिददाए अविह्मओ चउरो महुरो दक्खो सदक्खिञ्ञो अभिमदो आइदो तुट्ठो होदि । दय्य ण विकत्थेदि । अप्पं वि *(सुमरिदुं?) सुमरदि, बहुअं पि अवइदं विसुमरदि । अज्जुए! किं बहुणा, तस्स कुळवुत्तस्स गुणाणं चउब्भाअं पि सुदिग्घेण वि गिह्मदिअहेण वण्णिदुं ण सक्कं । किं बहुणा, दक्खिञ्जदाए परकेरअं विअ अत्तणो सरीरं धारेदि ।

**गणिका**—(ङ) †हञ्जे! कोणुखु[1] सो अय्यचारुदत्तस्स गुणाणं अणुकरेदि ।

---

(क) ततस्ततः ।

(ख) तत इहागतमात्र एव कश्चित् सार्थवाहपुत्रः समासादितः ।

(ग) कीदृशः ।

(घ) आकृतिमान् अविभ्रमन् अनुत्सिक्तो ललितो ललिततयाविस्मयश्चतुरो मधुरो दक्षः सदाक्षिण्योऽभिमत आचितस्तुष्टो भवति । दत्त्वा न विकत्थते । अल्पमपि (सुमरिदुं?) स्मरति, बहुकमप्यपकृतं विस्मरति । अज्जुके! किं बहुना, तस्य कुलपुत्रस्य गुणानां चतुर्भागमपि सुदीर्घेणापि ग्रीष्मदिवसेन वर्णयितुं न शक्यम् । किं बहुना, दक्षिणतया परकीयमिवात्मनः शरीरं धारयति ।

(ङ) हञ्जे! कोनुखलु स आर्यचारुदत्तस्य गुणाननुकरोति ।

---

१. 'खु एसो' ख. पाठः.

---

* 'उवइदं' इति स्यात् । उपकृतमिति च संस्कृतम् । † 'हञ्जे' इत्यतः प्राक् 'अपवार्य' इत्यपेक्षितं भाति ।

**चेटी**—(क) मम वि कोदूहळं सोदुं । कोणुहु उज्जअणिं अत्तणो गुणेहि मण्डेदि ।

**गणिका**—(ख) तदो तदो ।

**संवाहकः**—(ग) तदो तस्स गुणविक्कि[1]णिदसरीरो विस्सरिदकळत्तो उवजीविओ संवुत्तो ।

**गणिका**—(घ) किं सो दरिद्दो ।

**संवाहकः**—(ङ) कहं अणाचिक्खिदे अय्या जाणादि ।

**गणिका**—(च) एअस्सिं दुळ्ळहो गुणविभवो त्ति । तदो तदो ।

**चेटी**—(छ) को णामं[2] सो अय्यो ।

**संवाहकः**—(ज) अय्यचारुदत्तो णाम ।

---

(क) ममापि कौतूहलं श्रोतुम् । कोनुखल्वुज्जयनीमात्मनो गुणैर्मण्डयति ।

(ख) ततस्ततः ।

(ग) ततस्तस्य गुणविक्रीतशरीरो विस्मृतकलत्र उपजीवी संवृत्तः ।

(घ) किं स दरिद्रः ।

(ङ) कथमनाख्यात आर्या जानाति ।

(च) एकस्मिन् दुर्लभो गुणविभव इति । ततस्ततः ।

(छ) को नाम स आर्यः ।

(ज) आर्यचारुदत्तो नाम ।

---

१. 'णी', २. 'म एसो' ख. पाठः.— the whole stock of merits can not be in one man

C. 6

**गणिका** — (क) जुज्जइ । तदो तदो ।

**संवाहकः** — (ख) तदो सो विभवमन्ददाए अस्साहीणपरिजणो विसज्जिअकुडुम्बभरणो चारित्तमत्तावसेसो सत्थवाहकुळे पडिवसदि । अहं पि तेण अय्येण अब्भणुञ्ञादो—अण्णं उवचिट्ठदु त्ति । कहं अण्णं एरिसं[1] मणुस्सरअणं ळभेअन्ति, कहं च तस्स कोमळळळिदमहुरसरीरप्परिसकिदत्थं मे हत्थं साहारणसरीरसम्मद्देण[2] सोअणीअं करिस्सं ति जादणिव्वेदो दड्ढसरीररक्खणत्थं जूदोवजीवी संवुत्तो ।

(गणिका सहर्षबाष्पं चेटीमवलोकयति ।)

**चेटी** — (ग) तदो तदो ।

**संवाहकः**[3] — (घ) तदो बहूणि[4] बहूणि दिणाणि मए पराइदेण पुरुसेण[5] कदाइ अहं पि दहसु सुवण्णेसु पराइदो ह्मि ।

---

(क) युज्यते । ततस्ततः ।

(ख) ततः स विभवमन्दतयास्वाधीनपरिजनो विसर्जितकुटुम्बभरणश्चारित्रमात्रावशेषः सार्थवाहकुले प्रतिवसति । अहमपि तेनार्येणाभ्युनुज्ञातोऽन्यमुपतिष्ठतामिति । कथमन्यमीदृशं मनुष्यरत्नं लभेयेति, कथं च तस्य कोमलललितमधुरशरीरस्पर्शकृतार्थं मे हस्तं साधारणशरीरसंमर्देन शोचनीयं करिष्यामीति जातनिर्वेदो दग्धशरीररक्षणार्थं द्यूतोपजीवी संवृत्तः ।

(ग) ततस्तः ।

(घ) ततो बहूनि बहूनि दिनानि मया पराजितेन पुरुषेण कदाचिदहमपि दशसु सुवर्णेषु पराजितोऽस्मि ।

---

१. 'स' क. पाठः. २. 'द्दणेण' ख. पाठः. ३. 'कः—व' क. पाठः. ४. 'णि दि', ५. 'रि' ख. पाठः. 6 left 6 house c miserable 9 became sorry

गणिका — (क) तदो तदो ।

संवाहकः[1] — (ख) तदो अज्ज वेसमग्गे जइच्छोवणदो[2] समासादिदो ह्मि । तस्स भएण इह पविट्ठो । एवं अय्या जाणादु ।

गणिका — (आत्मगतम्) (ग) अहो अच्चाहिदं[3] । एवं खु मण्णे वासपादपविणासेण पक्खिणो आहिण्डन्ति त्ति । (प्रकाशम्) एवं गदे अत्तकेरओ अय्यो । हळा ! एहि तं जणं विसज्जेहि ।

चेटी — (घ) तह । (निष्क्रान्ता ।)

गणिका — (ङ) ण खु अय्येण अत्थणिमित्ता चिन्ता कादव्वा । अय्यचारुदत्तो एव देदि त्ति अय्यो जाणादु ।

(प्रविश्य)

चेटी — (च) अज्जुए ! विसज्जिदो सो जणो, परितुट्ठो गदो अ ।

---

(क) ततस्ततः ।

(ख) ततोऽद्य वेशमार्गे यदृच्छोपनतः समासादितोऽस्मि । तस्य भयेनेह प्रविष्टः । एवमार्या जानातु ।

(ग) अहो अत्याहितम् । एवं खलु मन्ये वासपादपविनाशेन पक्षिण आहिण्डन्त इति । एवं गत आत्मीय आर्यः । हला! एहि तं जनं विसर्जय ।

(घ) तथा ।

(ङ) न खल्वार्येणार्थनिमित्ता चिन्ता कर्तव्या । आर्यचारुदत्त एव ददातीत्यार्यो जानातु ।

(च) अज्जुके! विसर्जितः स जनः, परितुष्टो गतश्च ।

---

१. 'कः—अ' ख. पाठः. २. 'व', ३. 'दं खु । ए' क. पाठः. ४ having lost his next

२ मुक्तो

**संवाहकः** — (क) अणुग्गहिदो ह्मि ।

**गणिका** — (ख) गच्छदु अय्यो सुहिज्जणदंसणेण पीदिं णिव्वत्तेदुं ।

**संवाहकः** — (ग) अज्ज एव कदाई[1] णिव्वेदेण[2] पव्वजेअं । जइ इअं परिअणे सङ्कन्ता कळा भवे, तदो अय्याए अणुग्गहिदो भवेअं ।

**गणिका** — (घ) जस्स किदे इअं कळा सिक्खिदा, सो एव्व अय्येण उवचिट्ठिदव्वो भविस्सदि ।

**संवाहकः** — (स्वगतम्) (ङ) णिउणं खु पच्चाचक्खिदो ह्मि । को हि णाम अप्पणा[3] किदं पच्चुअआरेण विणासेदि । (प्रकाशम्[4]) अय्ये! गच्छामि दाव अहं ।

**गणिका** — (च) गच्छदु अय्यो पुणो दंसणाअ ।

**संवाहकः** — (छ) अय्ये! तह । (निष्क्रान्तः ।)

---

(क) अनुगृहीतोऽस्मि ।

(ख) गच्छत्वार्यः सुहृज्जनदर्शनेन प्रीतिं निर्वर्तयितुम् ।

(ग) अद्यैव कदाचिन्निर्वेदेन प्रव्रजेयम् । यदीयं परिजने सङ्क्रान्ता कला भवेत्, तत आर्ययानुगृहीतो भवेयम् ।

(घ) यस्य कृते इयं कला शिक्षिता, स एवार्येणोपस्थातव्यो भविष्यति ।

(ङ) निपुणं खलु प्रत्याख्यातोऽस्मि । को हि नामात्मना कृतं प्रत्युपकारेण विनाशयति । आर्ये! गच्छामि तावदहम् ।

(च) गच्छत्वार्यः पुनर्दर्शनाय ।

(छ) आर्ये! तथा ।

---

१. 'इ अण्णं पि णि' क. पाठः. २. 'दो अणु', ३. 'त्त' ख. पाठः. ४. 'म् । ग' क. पाठः. २ स्वतो २ शाके के कारण २ सन्यास

**गणिका**—(क) हं, सद्दो विअ ।

(प्रविश्य)

**चेटः**—(ख) विच्छित्तिए! विच्छित्तिए! कहिं कहिं अज्जुआ ।

**गणिका**—(ग) हञ्जे! किं एदं ।

**चेटः**—(घ) हं, विप्पळद्धो ह्मि । वादाअणणिक्खामिदपुव्वकाआए ओणमिअपओहराए कण्णऊरस्स[1] परिप्फन्दो अज्जुआए जेण ण दिट्ठो ।

**गणिका**—(ङ) ळहुजणस्स सुळहो विह्मओ । किं दे उस्सेअस्स कारणं ।

**चेटः**—(च) सुणादु अज्जुआ—एसो उग्गवेगेण ओगाहे[2]णणिव्वत्तिदेण पस्सुदमदगन्धं राअमग्गं करेन्तेण[3] मङ्गळहत्थिणा भद्दकवोदएण अणेअपुरुससङ्कुळेसु राअमग्गेसु उत्तरिअपडविराअदाए अहिअळक्खणीओ कोच्चि प्पव्वइदो समासादिदो ।

---

(क) हं, शब्द इव ।

(ख) विच्छित्तिके! विच्छित्तिके! कुत्र कुत्राज्जुका ।

(ग) हञ्जे! किमेतत् ।

(घ) हं, विप्रलब्धोऽस्मि । वातायननिष्क्रामितपूर्वकाययावनमितपयोधरया कर्णपूरस्य परिस्पन्दोऽज्जुकया येन न दृष्टः ।

(ङ) लघुजनस्य सुलभो विस्मयः । किं ते उत्सेकस्य कारणम् ।

(च) शृणोत्वज्जुका—एष उग्रवेगेनावगाहननिवर्तितेन प्रस्नुतमदगन्धं राजमार्गं कुर्वता मङ्गलहस्तिना भद्रकपोतकेनानेकपुरुषसङ्कुलेषु राजमार्गेषूत्तरीयपटविरागतयाधिकलक्षणीयः कश्चित् प्रव्रजितः समासादितः ।

---

१. 'ण्णेउर' क. पाठः. २. 'हणि', ३. 'रअन्ते' ख. पाठः.

**गणिका**—(क) हं, तदो तदो।

**चेटः**—(ख) तदो मए हत्थिहत्थामिद्दताडिअमाणो[1] दन्तन्तरपरिवत्तमाणो हत्थिहत्थपडिदचरणो तदो हा हा विपाडिदो हा हा हदो त्ति जणवादे संवुत्ते तदो दिण्णकरप्पहारेण परिवत्तिदं हत्थिं करिअ मोइदो सो परिव्वाजो।

**गणिका**—(ग) पिअं मे। तदो तदो।

**चेटः**—(घ) तदो सव्वो जणो भणादि—अहो चेडस्स कम्म त्ति। ण उण कोच्चि किं पि इच्छइ दाउं। तदो अज्जुए! केण वि कुळवुत्तेण उइदाणि आभरणट्ठाणाणि विळोइअ(ङ्गुट्ठेणाणिअ वि उणिअं[2]?) अळद्धं पेक्खिअ[3] दव्वं उवाळभिअ दिग्घं णिस्ससिअ एत्तओ मे विभवो त्ति करिअ परिजणहत्थे अअं पावरओ पेसिदो।

**गणिका**—(ङ) कोणुखु अय्यचारुदत्तस्स गुणाणं अणुकरेदि।

---

(क) हं, ततस्ततः।

(ख) ततो मया हस्तिहस्तामर्दताड्यमानो दन्तान्तरपरिवर्तमानो हस्तिहस्तपतितचरणः ततो हा हा विपाटितो हा हा हत इति जनवादे संवृत्ते ततो दत्तकरप्रहारेण परिवर्तितं हस्तिनं कृत्वा मोचितः स परिव्राट्।

(ग) प्रियं मे। ततस्ततः।

(घ) ततः सर्वो जनो भणति—अहो चेटस्य कर्मेति। न पुनः कश्चित् किमपीच्छति दातुम्। ततोऽज्जुके! केनापि कुलपुत्रेणोचितान्याभरणस्थानानि विलोक्य (ङ्गुट्टेणाणिअविउणिअ?) अलब्धं प्रेक्ष्य दैवमुपालभ्य दीर्घं निःश्वस्यैतावान् मे विभव इति कृत्वा परिजनहस्तेऽयं प्रावारकः प्रेषितः।

(ङ) कोनुखल्वार्यचारुदत्तस्य गुणाननुकरोति।

---

१. 'द', २. 'अ ळ', ३. 'अ दि' ख. पाठः.

**चेटी**——(क) अज्जुए! मम वि कोदूहळं अत्थि । कोणु-खु एसो ।

**गणिका**——(ख) केण वि साहुणा पुरुसेण होदव्वं ।

**चेटी**——(ग) साहु पुच्छीअदु[1] दाव ।

**गणिका**——(घ) हञ्जे! एकपुरुसपक्खवादिदा सव्वगुणाणं हन्ति ।

**चेटी**——(ङ) भद्द! से णाम तुवं जाणासि ।

**चेटः**——(च) ण हु जाणामि[2] ।

**गणिका**——(छ) अदिळहु तुए किदं[3] ।

**चेटी**——(ज) जइ एवं, इह तुए (कोत्ति? किं ति) मन्तिदं ।

---

(क) अज्जुके! ममापि कौतूहलमस्ति । कोनुखल्वेषः ।

(ख) केनापि साधुना पुरुषेण भवितव्यम् ।

(ग) साधु पृच्छ्यतां तावत् ।

(घ) हञ्जे! एकपुरुषपक्षपातिता सर्वगुणान् हन्ति ।

(ङ) भद्र! अस्य नाम त्वं जानासि ।

(च) न खलु जानामि ।

(छ) अतिलघु त्वया कृतम् ।

(ज) यद्येवम्, इह त्वया किमिति मन्त्रितम् ।

---

१. 'दु । गणिका—से', २. 'मि । चे' क. पाठः. ३. 'दं । चेटः' ख. पाठः.

**चेटः**—(क) अहं एत्तअं तु जाणामि—भद्दओ अविह्मओ त्ति।

**गणिका**—(ख) एहि दाव तं पेक्खामो।

**चेटः**—(ग) पेक्खदु पेक्खदु अज्जुआ। एसो गच्छइ।

**गणिका**—(प्रासादाद् विलोक्य) (घ) हञ्जे! एसो हि सो अय्यचारुदत्तो एव्व जण्णोववीदमत्तपावरओ गच्छइ। ता जाव दूरं गओ ण भविस्सदि एसो, पेक्खह्म दाव णं।

(निष्क्रान्ताः सर्वे।)

द्वितीयोऽङ्कः।

---

(क) अहमेतावत् तु जानामि—भद्रकोऽविस्मय इति।

(ख) एहि तावत् तं पश्यामः।

(ग) पश्यतु पश्यत्वज्जुका। एष गच्छति।

(घ) हञ्जे! एष हि स आर्यचारुदत्त एव यज्ञोपवीतमात्रप्रावारको गच्छति। तद् यावद् दूरं गतो न भविष्यत्येष, पश्यामस्तावदेनम्।

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति नायको विदूषकश्च ।)

**नायकः** — वयस्य ! वीणा[1] नामासमुद्रोत्थितं रत्नम् । कुतः,

उत्कण्ठितस्य हृदयानुगता सखीव
सङ्कीर्णदोषरहिता[2] विषयेषु गोष्ठी ।
क्रीडारसेषु मदनव्यसनेषु कान्ता
स्त्रीणां तु कान्तरतिविघ्नकरी सपत्नी ॥ १ ॥

**विदूषकः** — (क) भो वअस्स! को काळो किदपरिघो[3]सण-दाए णिस्सम्पादा राअमग्गा । कुक्कुरा वि ओसुत्ता । वअं णिद्दं[4] ण ळभामो । अण्णं च दाणि अच्छरीअं । इमं[5] हदवीणं ण रमामि । अहिअदिड्ढ[6]त्थाणे विच्छिण्णतन्तिआ होदु ।

**नायकः** — वयस्य! भावशाबलेन बहुशः खल्वद्य मधुरं गीतम् । न च भवान् रमते ।

**विदूषकः** — (ख) अदो एव्व एदं[7] अहं ण रमामि । महुरं पि बहु खादिअं अजिण्णं होइ ।

---

(क) भो वयस्य! कः कालः कृतपरिघोषणतया निःसम्पाता राजमार्गाः । कुक्कुरा अप्यवसुप्ताः । वयं निद्रां न लभामहे । अन्यच्चेदानीमाश्चर्यम् । इमां हत-वीणां न रमे । अधिकदृढस्थाने विच्छिन्नतन्त्रीका भवतु ।

(ख) अत एवैतामहं न रमे । मधुरमपि बहु खादितमजीर्णं भवति ।

---

१. 'णा खलु ना', २. 'ता सुरतेषु' ख. पाठः. ३. 'ए', ४. 'द्दं ळ', ५. 'दं' क. पाठः. ६. 'ढ्ढाणे' ख. पाठः. ७. 'दं ण' क. पाठः.

**नायकः**—सर्वथा[1] सुव्यक्तं गीतम् । कुतः,

रक्तं च तारमधुरं च समं स्फुटं च
भावार्पितं च न च साभिनयप्रयोगम् ।
किं वा प्रशस्य विविधैर्बहु तत्तदुक्त्वा*
भित्त्यन्तरं यदि भवेद् युवतीति विद्याम् ॥ २ ॥

**विदूषकः**—(क) कामं पसंसेदु भवं । मम खु दाव गाअन्तो मणुस्सो इत्थिआ वि पठन्ती उभअं आदरं ण देदि । गाअन्तो दाव मणुस्सो रत्तसुमणावेड्ढिदो[2] विअ पुरोहिदो दिढं ण सोहइ । इत्थिआ वि पठन्ती छिण्णणासिआ विअ धेणुआ अदि[3]विरू[4]वा होइ ।

**नायकः**—सखे ! उपारूढोऽर्धरात्रः । स्थिरतिमिरा राजमार्गाः । निस्सम्पातपुरुषत्वात् प्रसुप्तेवोज्जयनी प्रतिभाति । कुतः,

असौ हि दत्त्वा तिमिरावकाश-
मस्तं गतो ह्यष्टमपक्षचन्द्रः ।
तोयावगाढस्य वनद्विपस्य
विषाणकोटीव निमज्जमाना ॥ ३ ॥

---

(क) कामं प्रशंसतु भवान् । मम खलु तावद् गायन् मनुष्यः स्त्र्यपि पठन्त्युभयमादरं न ददाति । गायंस्तावन्मनुष्यो रक्तसुमनोवेष्टित इव पुरोहितो दृढं न शोभते । स्त्र्यपि पठन्ती छिन्ननासिकेव धेनुरतिविरूपा भवति ।

---

१. 'था व्य' क. पाठः. २. 'ड्ढि', ३. 'दिअवि', ४. 'रु', ५ 'व्रजलष्ट' ख. पाठः.

---

* 'तत्तदुक्तैः' इति स्यात् ।

विदूषकः—(क) सुट्ठु भवं भणादि । अन्तद्धिअमाण-चन्दळद्धावआसो ओदरदी विअ पासादादो अन्धआरो ।

नायकः—(परिक्रम्य) इदमस्मदीयं गृहम् । वर्धमानवक! वर्धमानवक! ।

विदूषकः—(ख) वड्ढमाणवअ! वड्ढमाणवअ! दुवारं अवावुद ।

(प्रविश्य)

चेटः—(ग) अम्मो अय्यमेत्तेओ ।

नायकः—वर्धमानवक! ।

चेटः—(घ) अम्मो भट्टिदारओ । भट्टिदारअ! वन्दामि ।

नायकः—पादोदकमानय ।

चेटः—(परिक्रम्य) (ङ) इदं पादोदअं।(नायकस्य पादौ प्रक्षालयति।)

विदूषकः—(च) वड्ढमाणवअ! मम वि पादं पक्खाळेहि।

---

(क) सुष्ठु भवान् भणति । अन्तर्धीयमानचन्द्रलब्धावकाशोऽवतरतीव प्रासादादन्धकारः ।

(ख) वर्धमानवक! वर्धमानवक! द्वारमपावृणु ।

(ग) अम्मो आर्यमैत्रेयः ।

(घ) अम्मो भर्तृदारकः । भर्तृदारक! वन्दे ।

(ङ) इदं पादोदकम् ।

(च) वर्धमानवक! ममापि पादं प्रक्षालय ।

---

१. 'ड्ढ' क. पाठः.

**चेटः**---(क) सुहौदेसु पादेसु भूमीए पळोट्ठिदव्वं । उदअं विणासेहि । अहव आणेहि । पक्खाळइस्सं । (नाट्येन विदूषकस्य पादौ प्रक्षालयति ।)

**विदूषकः**---(ख) ण केवळं दासीएपुत्तेण पादा धोदा, मुहं वि धोदं ।

**नायकः**---वयस्य !

इयं हि निद्रा नयनावलम्बिनी
ललाटदेशादुपसर्पतीव माम् ।
अदृश्यमाना चपला जरेव या
मनुष्यवीर्यं परिभूय वर्धते ॥ ४ ॥

मैत्रेय ! सुप्यताम् ।

(निष्क्रान्तश्चेटः ।)

(प्रविश्याभरणसमुद्गहस्ता)

**चेटी**---(ग) अय्यमेत्तेअ! उट्ठेहि उट्ठेहि ।

---

(क) सुधौतयोः पादयोर्भूम्यां प्रलोठितव्यम् । उदकं विनाशय । अथवानय । प्रक्षालयिष्यामि ।

(ख) न केवलं दास्याःपुत्रेण पादौ धौतौ, मुखमपि धौतम् ।

(ग) आर्यमैत्रेय! उत्तिष्ठोत्तिष्ठ ।

---

१. 'नान्तले' ख० पाठः.

**विदूषकः**—(क) भोदि! किं एदं ।

**चेटी**—(ख) इअं सुवण्णभण्डं सट्ठीए सत्तमीए (परिवेट्ठामि?) अट्ठमी खु अज्ज ।

**नायकः**—इदं तद् वसन्तसेनायाः स्वकम् ।

**चेटी**—(ग) आम । भणादु भणादु भट्टिदारओ गह्णदु त्ति ।

**नायकः**—मैत्रेय! गृह्यताम् ।

**विदूषकः**—(घ) किंणिमित्तं अअं अळङ्कारो अब्भन्तरचउस्साळं ण प्पवेसीअदि ।

**नायकः**—मूर्ख! बाह्यजनधारितमलङ्कारं गृहजनो न द्रक्ष्यति ।

**विदूषकः**—(ङ) का गई । आणेहि[1] गह्णामि चोरेहिं गह्णिअमाणं ।

(चेटी दत्त्वा निष्क्रान्ता ।)

**विदूषकः**—(च) भो! किंणिमित्तं सो पावरओ तस्स गणिआपरिआरे[2]अस्स दिण्णो ।

---

(क) भवति! किमेतत् ।
(ख) इदं सुवर्णभाण्डं षष्ठ्यां सप्तम्यां (परिवेष्टामि?) अष्टमी खल्वद्य ।
(ग) आम । भणतु भणतु भर्तृदारकः गृह्यतामिति ।
(घ) किन्निमित्तमयमलङ्कारोऽभ्यन्तरचतुःशालं न प्रवेश्यते ।
(ङ) का गतिः । आनय गृह्णामि चोरैर्गृह्यमाणम् ।
(च) भोः! किन्निमित्तं स प्रावारकस्तस्मै गणिकापरिचारकाय दत्तः ।

---

१. 'दु चे' क. पाठः. २. 'रस्स' ख. पाठः.

**नायकः**—सानुक्रोशतया ।

**विदूषकः**—(क) इह वि साणुक्कोसदा ।

**नायकः**—वयस्य ! मा मैवम् ।

**विदूषकः**—(ख) अहं भरिदगद्दभो विअ भूमीए पळोट्ठामि ।

**नायकः**—निद्रा मां बाधते । तूष्णीं भव ।

**विदूषकः**—(ग) सअंदु भवं सुहप्पबोहाअ । जाव अहं वि सुविस्सं ।

(द्वावपि स्वपितः ।)

(ततः प्रविशति सज्जलकः ।)

**सज्जलकः**—एष भोः !

कृत्वा शरीरपरिणाहसुखप्रवेशं
शिक्षाबलेन च बलेन च कर्ममार्गम् ।
गच्छामि भूमिपरिसर्पणघृष्टपार्श्वो
निर्मुच्यमान इव जीर्णतनुर्भुजङ्गः ॥ ५ ॥

भोः ! वृक्षवाटिकापक्षद्वारे सन्धिं छित्वा प्रविष्टोऽस्मि । यावदिदानीं चतुःशालमुपसर्पामि । (सनिर्वेदं विचिन्त्य) भोः !

---

(क) इहापि सानुक्रोशता ।
(ख) अहं भरितगर्दभ इव भूम्यां प्रलुठामि ।
(ग) शेतां भवान् सुखप्रबोधाय । यावदहमपि स्वप्स्यामि ।

---

१. 'इ' क. पाठः.

कामं नीचमिदं वदन्तु विबुधाः सुप्तेषु यद्वर्तते
विश्वस्तेषु हि वञ्चनापरिभवः शौर्यं न कार्कश्यता* ।
स्वाधीना वचनीयतापि तु वरं बद्धो न सेवाञ्जलि-
र्मार्गश्चैष नरेन्द्रसौप्तिकवधे पूर्वं कृतो द्रौणिना ॥ ६ ॥

(विचिन्त्य[1])

लुब्धोऽर्थवान् साधुजनावमानी
वणिक् स्ववृत्तावतिकर्कशश्च ।
यस्तस्य गेहं यदि नाम लप्स्ये
भवामि दुःखोपहतो न चित्ते ॥ ७ ॥

यद्वा तद्वा भवतु । किं वा न कारयति मन्मथः । यावदारभे कर्म । भोः!

देशः को नु जलावसेकशिथिलश्छेदादशब्दो भवेद्
भित्तीनां क्व नु दर्शितान्तरसुखः सन्धिः करालो भवेत् ।
क्षारक्षीणतया चलेष्टककृशं हर्म्यं क्व जीर्णं भवेत्
कुत्र स्त्रीजनदर्शनं च न भवेत् स्वन्तश्च यतो भवेत् ॥ ८ ॥

(परिक्रम्य) इयं वास्तुविभागक्रिया । सोपस्नेहतया गृहविशिष्ट इवायं भवनविन्यासः । इह तावत् प्रवेशावकाशं करिष्ये । भोः! कीदृश इदानीं सन्धिच्छेदः कर्तव्यः स्यात् ।

---

१. 'न्त्य अपि च लु' क. पाठः.

---

* कार्कश्यता कर्कशत्वम् । आलस्यशब्दवत् कार्कश्यशब्दो धर्मिपरो द्रष्टव्यः ।

सिंहाक्रान्तं पूर्णचन्द्रं झषास्यं
चन्द्रार्धं वा व्याघ्रवक्त्रं त्रिकोणम् ।
सन्धिच्छेदः पीठिका वा गजास्य-
मस्मत्पक्ष्या विस्मितास्ते कथं स्युः ॥ ९ ॥

भवतु सिंहाक्रान्तमेवच्छेदयिष्ये ।

**विदूषकः**—(क) भोः ! जागत्ति खु भवं, णहि ।

**नायकः**—किमर्थम् ।

**विदूषकः**—(ख) अहं खु दाव कत्तव्वकरित्तीकिदसङ्केदो[१] विअ सक्किअसमणओ णिद्दं ण ळभामि । वामं खु मे अक्खि फन्देदि । चोरो सन्धि छिन्ददी विअ[२] पेक्खामि । जइ ईदिसी अवत्था अत्थाणं, जादीए दरिद्दो एव्व होमि ।

**नायकः**—मूर्ख ! धिक् त्वाम् । दारिद्र्यमभिलषसि ।

**सज्जलकः**—अथ केनेदानीं सन्धिच्छेदमार्गः सूचयितव्यः[३] स्यात् । नन्विदं दिवा ब्रह्मसूत्रं रात्रौ कर्मसूत्रं भविष्यति[४] ।

---

(क) भोः! जागर्ति खलु भवान्, नहि ।

(ख) अहं खलु तावत् कर्तव्यकरिक्तीकृतसङ्केत इव शाक्यश्रमणको निद्रां न लभे । वामं खलु मेऽक्षि स्पन्दते । चोरः सन्धिं छिनत्तीव पश्यामि । यदीदृश्यवस्थार्थानां, जात्या दरिद्र एव भवामि ।

---

१. 'रीकि', २. 'अ हिं पे' क. पाठः. ३. 'त्र', ४. 'वति' ख. पाठः.

अद्यास्य भित्तिषु मया निशि पाटितासु-
च्छेदात् समासु सकृदर्पितकाकलीषु ।
काल्यं विषादविमुखः प्रतिवेश[1]वर्गो
दोषांश्च मे वदतु कर्मसु कौशलं च ॥ १० ॥

नमः खरपटाय । नमो रात्रिगोचरेभ्यो देवेभ्यः । (तथा करोति ।) हन्त अवसितं कर्म । प्रविशामस्तावत् । (प्रविश्य) अये ! ज्वलति दीपः । अपसरामि तावत् । धिक्, सज्जलकः खल्वहम् ।

मार्जारः प्लवने वृकोऽपसरणे श्येनो गृहालोकने
निद्रा सुप्तमनुष्यवीर्यतुलने संसर्पणे पन्नगः ।
माया वर्णशरीरभेदकरणे वाग् देशभाषान्तरे
दीपो रात्रिषु सङ्कटे च[2] तिमिरं वायुः स्थले नौर्जले ॥ ११ ॥

(सर्वतो विलोक्य) आगन्तुकत्वादविदितसमृद्धिविस्तरः केवलं भवनप्रत्ययादिह प्रविष्टोऽस्मि । न चेदानीं[3] कश्चित् परिच्छदविशेषं पश्यामि । किन्नुखलु दरिद्र एवायम् । उताहो[4] अयं संयमननिरर्थकं भूष्यं[5] धारयति । अथवा, अभिजातोऽयं भवनविन्यासः । उपभुक्तप्रनष्टविभवेनानेन भवितव्यम् ।

तथाविभवमन्दोऽपि जन्मभूमिव्यपेक्षया ।
गृहं विक्रयकालेऽपि *नीलस्नेहेन रक्षति ॥ १२ ॥

---

१. 'श्म', २. 'षु', ३. 'नीं गृहस्यानुरूपं क', ४. 'हो सं', ५. 'द्रष्टव्यं धा' ख. पाठः.

---

* नील्या रञ्जकद्रव्येण रक्तो नीलः । स इव स्नेहो नीलस्नेहः । दृढस्नेह इत्यर्थः । नीलीरागो वस्त्रादावारूढो नापैति । तद्वदनपायः स्नेहो नीलस्नेह इहोक्तः । 'नीलीरागः स्थिरप्रेमा' इति च यादवः ।

भवतु पश्यामस्तावत् । अथवा, न खलु मे तुल्यावस्थः कुलपुत्रः पीडयितव्यः । गच्छामि तावत् ।

विदूषकः—(क) भो ! गह्ण एदं सुवण्णभण्डअं ।

सज्जलकः—कथं सुवर्णभाण्डमित्याह । किं मां दृष्ट्वाभिभाषते । आहोस्वित् सत्त्वलाघवात् स्वप्नायते । भवतु पश्यामस्तावत्[1] । (दृष्ट्वा) भूतार्थं सुप्त एवायम् । तथाहि,

निःश्वासोऽस्य न शङ्कितो न विषमस्तुल्यान्तरं जायते
गात्रं सन्धिषु दीर्घतामुपगतं शय्याप्रमाणाधिकम् ।
दृष्टिर्गाढनिमीलिता न चपलं पक्ष्मान्तरं[2] जायते
दीपं चैव न मर्षयेदभिमुखः[3] स्याल्लक्षसुप्तो यदि ॥ १३ ॥

क्वनुखलु तत्[4] । अये जर्जरप्रावरणैकदेशो दीपप्रभाव्यक्तीकृत[5]रूपं दृश्यते । सुपरिगृहीतमनेन । अयमत्र प्राप्तकालः । इमे मया गृहीताः शलभाः । दीपनिर्वापणार्थमेकं मुञ्चामि । (भ्रमरकरण्डकादेकं मुञ्चति ।) अये एष दीपं निर्वाप्य पतति ।

विदूषकः—(ख) अविहा णिव्वाविदो दीवो दाणिं । मुसिदो ह्मि । भो चारुदत्त ! गह्ण[6] एदं सुवण्णाळङ्कारं । अहं खु भीदीए

---

(क) भोः! गृहाणैतत् सुवर्णभाण्डकम् ।

(ख) अविहा निर्वापितो दीप इदानीम् । मुषितोऽस्मि । भोश्चारुदत्त! गृहाणेमं

---

१. 'मि ताव', २. 'क्षा', ३. 'खं' ख. पाठः. ४. 'तावत्', ५. 'भावव्य', ६. 'दं सु' क. पाठः.

उप्पहप्पवुत्तो विअ वणिजो णिद्दं ण लभामि। मम बह्मत्तणेण साविदो सि, जइ ण गह्णसि।

**सज्जलकः**—किमत्र शपथपरिग्रहेण। एष प्रतिगृह्णामि। (गृह्णाति।)

**विदूषकः**—(दत्त्वा) (क) अहं विक्किणिदभण्डओ[1] विअ वणिजओ[2] सुहं सइस्सं।

**सज्जलकः**—सुखं स्वपिहि महाब्राह्मण!। (विचिन्त्य) भोः! ब्राह्मणेन विश्वासाद् दीयमानं मया हर्तव्यमासीत्।

धिगस्तु खलु दारिद्र्यमनिर्वेदं च यौवनम्।
यदिदं दारुणं कर्म निन्दामि च करोमि च॥ १४॥

(नेपथ्ये पटहशब्दः क्रियते।)

**सज्जलकः**—(कर्णं दत्त्वा) अये प्रभातसमयः संवृत्तः। अपसरामि तावत्।

(निष्क्रान्तः सज्जलकः।)

(प्रविश्य)

**चेटी**—(साक्रन्दम्[3]) (ख) अय्यमेत्तेअ! अह्माणं रुक्खवाडिआपक्खदुवाले[4] सन्धिं छिन्दिअ चोरो पविट्ठो।

---

सुवर्णालङ्कारम्। अहं खलु भीत्योत्पथप्रवृत्त इव वणिग् निद्रां न लभे। मम ब्रह्मत्वेन शापितोऽसि, यदि न गृह्णासि।

(क) अहं विक्रीतभाण्डक इव वणिक् सुखं शयिष्ये।

(ख) आर्यमैत्रेय! अस्माकं वृक्षवाटिकापक्षद्वारे सन्धिं छित्त्वा चोरः प्रविष्टः।

---

१. 'क्कि', २. 'णिओ'. ३. 'न', ४. 'रे' क. पाठः.

विदूषकः—(सहसोत्थाय) (क) किं भणादि होदी ।

(चेटी रुक्खवाडिअत्ति पठति ।)

विदूषकः—(ख) चोरं छिन्दिअ सन्धी पविट्ठो ।

चेटी—(ग) हदास ! सन्धि छि॰ ॰अ चोरो पविट्ठो ।

विदूषकः—(घ) आअछ णं दंसेहि ।

चेटी—(परिक्रम्य) (ङ) एदं ।

विदूषकः—(च) अविहा दासीएवुत्तेण कुक्कुरेण पवेसो किदो । भोदि! आअच्छ, चारुदत्तस्स पिअं णिवेदेमि ।

(उभावुपगम्य)

भो चारुदत्त! पिअं दे णिवेदेमि ।

नायकः—(बुद्ध्वा) किं मे प्रियम् । ननु वसन्तसेना प्राप्ता ।

विदूषकः—(छ) ण खु वसन्तसेणा, वसन्तसेणो पत्तो ।

नायकः—रदनिके! किमेतत् ।

---

(क) किं भणति भवती ।

(ख) चोरं छित्त्वा सन्धिः प्रविष्टः ।

(ग) हताश! सन्धि छित्त्वा चोरः प्रविष्टः ।

(घ) आगच्छ ननु दर्शय ।

(ङ) एतत् ।

(च) अविहा दास्याःपुत्रेण कुक्कुरेण प्रवेशः कृतः । भवति ! आगच्छ चारुदत्तस्य प्रियं निवेदयामि । भोश्चारुदत्त ! प्रियं ते निवेदयामि ।

(छ) न खलु वसन्तसेना, वसन्तसेनः प्राप्तः ।

चेटी — (क) भट्टिदारअ! अह्माणं रुक्खवाडिआपक्खदुवारे सन्धि छिन्दिअ चोरो पविट्ठो ।

नायकः — किं चोरः प्रविष्टः ।

विदूषकः — (ख) भो वअस्स! सव्वहा तुवं भणासि, मुक्खो मेत्तेओ अपण्डिदो मेत्तेओ त्ति । णं मए सोभणं किदं तं सुवण्णभण्डअं[1] तव हत्थे समप्पअन्तेण ।

नायकः — किं भवता दत्तम् ।

विदूषकः — (ग) अहइं ।

नायकः — कस्यां वेलायाम् ।

विदूषकः — (घ) अद्धरत्ते ।

नायकः — किमर्धरात्रे । बाढं दत्तम् ।

विदूषकः — (ङ) भो चारुदत्त! जं वेळं पडिवुद्धो आसि, [2]तंस्सि वेळाअं खु दिण्णं ।

---

(क) भर्तृदारक! अस्माकं वृक्षवाटिकापक्षद्वारे सन्धिं छित्त्वा चोरः प्रविष्टः ।

(ख) भो वयस्य! सर्वथा त्वं भणसि, मूर्खो मैत्रेयोऽपण्डितो मैत्रेय इति । ननु मया शोभनं कृतं तत् सुवर्णभाण्डकं तव हस्ते समर्पयता ।

(ग) अथकिम् ।

(घ) अर्धरात्रे ।

(ङ) भोश्चारुदत्त! यस्यां वेलायां प्रतिबुद्ध आसीः, तस्यां वेलायां खलु दत्तम् ।

---

१. 'अं भवदो स' क. पाठः. २. 'तं वेळं खु' ख. पाठः.

**नायकः**—हन्त हृतं सुवर्णभाण्डकम् ।

**विदूषकः**—(क) दाणिं मे हत्थे *पडिच्छिदु अत्तभवं ।

**नायकः**—(आत्मगतम्)

कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति ।
शङ्कनीया हि दोषेषु निष्प्रभावा दरिद्रता ॥ १५ ॥

(प्रविश्य)

**ब्राह्मणी**—(ख) रदणिए! रदणिए! आअच्छ । णहि सुणादि । कवाडसद्दं दाव करिस्सं । (तथा करोति ।)

**चेटी**—(ग) हं, कवाडसद्दो विअ । भट्टिदारिआ मं सद्दावेदि । (परिक्रम्य) भट्टिदारिए! इअह्मि ।

**ब्राह्मणी**—(घ) ण परिक्खदो ण वावादिदो अय्यउत्तो अय्यमेत्तेओ वा ।

---

(क) इदानीं मम हस्ते प्रयच्छत्वत्रभवान् ।

(ख) रदनिके! रदनिके! आगच्छ । नहि शृणोति । कवाटशब्दं तावत् करिष्यामि ।

(ग) हं, कवाटशब्द इव । भर्तृदारिका मां शब्दापयति । भर्तृदारिके! इयमस्मि ।

(घ) न परिक्षतो न व्यापादित आर्यपुत्र आर्यमैत्रेयो वा ।

---

१. 'कः—भो चारुदत्त! सव्वदा तुवं भणासि मुक्खो मेत्तेओ अपण्डिओ मेत्तेओ त्ति । णं मए सोभणं किदं तं सुवण्णभण्डअं भवदो समप्पअन्तेण । दाणिं' ख. पाठः ।

---

* 'पअच्छदु' इति स्यात् ।

**चेटी** — (क) कुसली भट्टिदारओ अय्यमेत्तेओ अ । जो तस्स जणस्स अळङ्कारो चोरेण गहीदो ।

**ब्राह्मणी** — (ख) किं भणासि चोरेण गहीदत्ति ।

**चेटी** — (ग) अहइं ।

**ब्राह्मणी** — (घ) किंणुखु तस्स जणस्स दादव्वं भविस्सदि। अहव एदं दइस्सं । (कर्णौ स्पृष्ट्वा) हद्धि ताळीपत्तं खु एदं । सो दाणि परिअओ मं विळम्बेदि । किं दाणि करिस्सं । (विचिन्त्य) भोदु, दिट्ठं । मम ञ्जादिकुळादो ळद्धा सदसहस्समुळ्ळा मुत्तावळी । तं पि अय्यउत्तो सोढीरदाए पडिच्छदि । भोदु, एवं दाव करिस्सं । (निष्क्रान्ता ।)

**विदूषकः** — (ङ) इमस्स अन्धआरुप्पादिदस्स अवराहस्स किदे भवन्तं सीसेण पसादेमि । दाणिं मे हत्थे पडिच्छदु अत्तभवं ।

---

(क) कुशली भर्तृदारक आर्यमैत्रेयश्च । यस्तस्य जनस्यालङ्कारश्चोरेण गृहीतः ।

(ख) किं भणासि चोरेण गृहीतं इति ।

(ग) अथकिम् ।

(घ) किन्नुखलु तस्मै जनाय दातव्यं भविष्यति । अथवैतद् दास्यामि । हा धिक् तालीपत्रं खल्वेतत् । स इदानीं परिचयो मां विडम्बयति । किमिदानीं करिष्यामि । भवतु, दृष्टम् । मम ज्ञातिकुलाद् लब्धा शतसहस्रमूल्या मुक्तावली । तामप्यार्यपुत्रः शौटीरतया प्रतीच्छति । भवतु , एवं तावत् करिष्यामि ।

(ङ) अस्यान्धकारोत्पादितस्यापराधस्य कृते भवन्तं शीर्षेण प्रसादयामि । इदानीं मे हस्ते प्रयच्छत्वत्रभवान् ।

**नायकः** — किं भवानिदानीं मां बाधते ।

भवांस्तावदविश्वासी शीलज्ञो मम नित्यशः ।
किं पुनः स कलाजीवी वञ्चनापण्डितो जनः ॥ १६ ॥

**विदूषकः** — (क) मण्णे मए मन्दभग्गेण कुम्भीळस्स हत्थे दिण्णं । (विषण्णस्तिष्ठति ।)

(प्रविश्य)

**ब्राह्मणी** — (ख) रदणिए! अय्यमेत्तेअं सद्दावेहि ।

**चेटी** — (ग) अय्यमेत्तेअ! भट्टिदारिआ तुमं[1] सद्दावेदि ।

**विदूषकः** — (घ) भोदि! किं मं ।

**चेटी** — (ङ) आम ।

**विदूषकः** — (च) एस आअच्छामि । (उपसर्पति ।)

**ब्राह्मणी** — (छ) अय्यमेत्तेअ! इमं पडिग्गहं पडिगह्ण ।

---

(क) मन्ये मया मन्दभाग्येन कुम्भीलस्य हस्ते दत्तम् ।

(ख) रदनिके! आर्यमैत्रेयं शब्दापय ।

(ग) आर्यमैत्रेय! भर्तृदारिका त्वां शब्दापयति ।

(घ) भवति! किं माम् ।

(ङ) आम ।

(च) एष आगच्छामि ।

(छ) आर्यमैत्रेय! इमं प्रतिग्रहं प्रतिगृहाण ।

---

१. 'वं' ख. पाठः.

**विदूषकः** —(क) अवत्थाविरुद्धो खु अअं पदाणविभवो। कुदो एदस्स आगमो ।

**ब्राह्मणी** —(ख) णं सट्ठिं उववसामि । सव्वसारविभवेण बह्मणेण सोत्थि वाअइदव्वं त्ति एसो इमस्स आगमो ।

**विदूषकः** —(ग) अट्ठमी खु अज्ज ।

**ब्राह्मणी** —(घ) पमा[1](दा)दो अदिक्कमो किदो । अज्ज पूआ णिव्वत्तीअदि ।

**विदूषकः** —(ङ) †(अणवदावदाए ?) पदाणस्स अणुक्कोसो विअ पडिभादि । (जनान्तिकम्) रदणिए ! किं करिस्सं ।

**चेटी** —(अपवार्य) (च) किंणुखु तस्स जणस्स दादव्वं

---

(क) अवस्थाविरुद्धः खल्वयं प्रदानाविभवः । कुत एतस्यागमः ।

(ख) ननु षष्ठीमुपवसामि । सर्वसारविभवेन ब्राह्मणेन स्वस्ति वाचयितव्यमित्येषोऽस्यागमः ।

(ग) अष्टमी खल्वद्य ।

(घ) प्रमादाद् अतिक्रमः कृतः । अद्य पूजा निर्वर्त्यते ।

(ङ) (अणवदावदाए?) प्रदानस्यानुक्रोश इव प्रतिभाति । रदनिके ! किं करिष्यामि ।

(च) किन्नुखलु तस्मै जनाय दातव्यं भविष्यतीत्येतन्निमित्तं भर्तृदारकः

---

१. 'पा' ख. पाठः.

---

† 'अणणुरूवदाए' इति स्यात् ।

भविस्सदि त्ति एदण्णिमित्तं भट्टिदारओ सन्तप्पदि त्ति भट्टिदारिआ तव हत्थे दइअ अय्यउत्तं अणिरिणं करिस्सामि त्ति एवं करेदि । ता गह्ण एदं ।

**ब्राह्मणी**—(क) उदअसम्भवदाए मुत्तावळीए तव अ दुळ्ळहदाए उवआरो विस्सरिदो । गह्ण एदं । (ददाति)

**विदूषकः**—(गृहीत्वा) (ख) सव्वं दाव चिट्ठदु । रोदिदी विअ होदीए दिट्ठी ।

**ब्राह्मणी**—(ग) देवउळधूमेण रोदाविदा ।

**विदूषकः**—(घ) साविदासि तत्तहोदा चारुदत्तेण, जइ अळिअं भणासि ।

**ब्राह्मणी**—(ङ) हद्धि । (निष्क्रान्ता ।)

**विदूषकः**—(च) एसा वाआए दुक्खं रक्खिअ अस्सूहि सूइअ गआ । (उपगम्य) भो ! इदं ।

---

संतप्यत इति भर्तृदारिका तव हस्ते दत्त्वार्यपुत्रमनृणं करिष्यामीत्येवं करोति । तद् गृहाणैतत् ।

(क) उदकसम्भवतया मुक्तावल्यास्तव च दुर्लभतयोपचारो विस्मृतः । गृहाणैतत् ।

(ख) सर्वं तावत् तिष्ठतु । रोदितीव भवत्या दृष्टिः ।

(ग) देवकुलधूमेन रोदिता ।

(घ) शापितासि तत्रभवता चारुदत्तेन, यद्यलीकं भणासि ।

(ङ) हा धिक् ।

(च) एषा वाचा दुःखं रक्षित्वाश्रुभिः सूचयित्वा गता । भोः! इदम् ।

**नायकः** — किमेतत् ।

**विदूषकः** — (क) सरिसकुळदारसङ्गहस्स फळं ।

**नायकः** — किं ब्राह्मणी मामनुकम्पते ।

**विदूषकः** — (ख) एवं विअ ।

**नायकः** — धिगात्मानम् । अद्य हतोऽस्मि ।

मयि द्रव्यक्षयक्षीणे स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी सार्थतः पुमान् ॥ १७ ॥

**विदूषकः** — (ग) तत्तहोदी हिअएण तुमं याचेदि । अहं सीसेण यांचेमि[1] । गह्ण एदं ।

**नायकः** — तथा । (गृहीत्वा) वयस्य! इमां मुक्तावलीं गृहीत्वा वसन्तसेनायाः सकाशं गच्छ ।

अर्थेषु काममुपलभ्य मनोरथो मे
स्त्रीणां धनेष्वनुचितं प्रणयं करोति ।
माने च कार्यकरणे च विलम्बमानो
धिग् भोः! कुलं च पुरुषस्य दरिद्रतां च ॥ १८ ॥

**विदूषकः** — (घ) अहो[2] अप्पमुळस्सं[3] सुवण्णभण्डअस्स किदे सदसहस्समुळ्ळा मुत्तावळी णीआइदव्वा[4] ।

---

(क) सदृशकुलदारसंग्रहस्य फलम् ।

(ख) एवमिव ।

(ग) तत्रभवती हृदयेन त्वां याचते । अहं शीर्षेण याचे । गृहाणैतत् ।

(घ) अहो अल्पमूल्यस्य सुवर्णभाण्डकस्य कृते शतसहस्रमूल्या मुक्तावली निर्यातयितव्या ।

---

१. 'आएमि', २. 'भो! अहो', ३. 'स्स कि', ४. 'णिय्याद' ख. पाठः.

**नायकः**—वयस्य ! मा मैवम् ।

यं समालक्ष्य विश्वासं न्यासोऽस्मासु कृतस्तया ।
तस्यैतन्महतो मूल्यं प्रत्ययस्य प्रदीयताम् ॥ १९ ॥

(निष्क्रान्तौ[1] सर्वे ।)

तृतीयोऽङ्कः ।

---

१. 'न्तौ ।' ख. पाठः.

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति[1] सोत्कण्ठा वसन्तसेना, चित्रफलकामादाय वर्तिकाकरण्डहस्ता चेटी च ।)

**गणिका** — (क) हञ्जे! पेक्खसि[2] सरिसी तस्स जणस्स ।

**चेटी** — (ख) अज्जुए! तस्सिं हत्थिविमद्दकोळाहळे बहुमाणपय्यत्थाए दिट्ठीए दूरदो दिट्ठो सो भट्टिदारओ ईदिसो एव्व ।

**गणिका** — (ग) तुमं दाव दक्खो वेसवासजणो त्ति जणवादं पूरअन्ती अळिअं भणासि ।

**चेटी** — (घ) किं एदं वेसवासजणो सव्वो दक्खिणो होइ त्ति । पेक्खदु अज्जुआ चम्पआरामे पिचुमन्दा जाअन्ति । अदिसरिस त्ति मम हिअअं अहिरमदि । परमत्थदो एव्व पसंसीअदि णं कामदेवो ।

---

(क) हञ्जे! पश्यसि सदृशी तस्य जनस्य ।

(ख) अज्जुके! तस्मिन् हस्तिविमर्दकोलाहले बहुमानपर्यस्तया दृष्ट्या दूरतो दृष्टः स भर्तृदारक ईदृश एव ।

(ग) त्वं तावद् दक्षो वेशवासजन इति जनवादं पूरयन्त्यलीकं भणसि ।

(घ) किमेतद् वेशवासजनः सर्वो दक्षिणो भवतीति । पश्यत्वज्जुका चम्पकारामे पिचुमन्दा जायन्ते । अतिसदृश इति मम हृदयमभिरमते । परमार्थत एव प्रशस्यते ननु कामदेवः ।

---

१. 'ति व', २. 'सरिखो तस्स अय्यस्स' क. पाठः.

**गणिका**—(क) हञ्जे! सहीजणेण अवहसणीअत्तणं[1] अत्तणो[2] परिहरामि।

**चेटी**—(ख) एदं जुज्जइ। सहीजणसपत्तिओ[3] गणिआजणो णाम।

(ततः प्रविशत्याभरणहस्तापरा[4] चेटी।)

**चेटी**—(ग) सुहं अज्जुआए।

**गणिका**—(घ) हञ्जे! साअदं दे।

**चेटी**—(ङ) अज्जुए! अत्ता आणवेदि—इदं दुवारं पविट्ठं पोक्खरं उवावत्तिदं पवहणं। ता[5] तुवरमाणमण्डणा गहीदावउण्ठणा आअच्छदु त्ति। इह अळङ्कारं अळङ्करेदु अज्जुआ।

**गणिका**—(च) किं अय्यचारुदत्तो मण्डइस्सिदि।

---

(क) हञ्जे! सखीजनेनापहसनीयत्वमात्मनः परिहरामि।

(ख) एतद् युज्यते। सखीजनसपत्नीको गणिकाजनो नाम।

(ग) सुखमज्जुकायाः।

(घ) हञ्जे! स्वागतं ते।

(ङ) अज्जुके! अम्बाज्ञापयति—इदं द्वारं प्रविष्टं पौष्करमुपावर्तितं प्रवहणम्। तत् त्वरमाणमण्डना गृहीतावगुण्ठनागच्छत्विति। इहालङ्कारमलङ्करोत्वज्जुका।

(च) किमार्यचारुदत्तो मण्डयिष्यति।

---

१. 'सीअ', २. 'त्ताणं प', ३. 'परित्ति' ख. पाठः. ४. 'त्यलङ्कारहस्ता चे' क. पाठः. ५. 'ता तुवं तुर' ख. पाठः.

**चेटी** — (क) णहि, जेण अळङ्कारो पेसिदो सो राअसाळो सण्ठाणो ।

**गणिका** — (ख) अवेहि अविणीदे! ।

**चेटी**— (ग) पसीददु पसीददु अज्जुआ। सन्देसं खु अहं मन्तेमि । (पादयोः पतति ।)

**गणिका** — (घ) उट्ठेहि उट्ठेहि । कुसन्देसं[1] असूआमि, ण तुवं ।

**चेटी** — (ङ) किं अहं अत्तं भणामि ।

**गणिका** — (च) भणेहि अत्तं — जदा अय्यचारुदत्तो अभिसारइदव्वो तदा मण्डेमि त्ति ।

**चेटी** — (छ) तह । (निष्क्रान्ता ।)

---

(क) नहि, येनालङ्कारः प्रेषितः स राजस्यालः संस्थानः ।

(ख) अपेह्यविनीते ।

(ग) प्रसीदतु प्रसीदत्वज्जुका । सन्देशं खल्वहं मन्त्रये ।

(घ) उत्तिष्ठोत्तिष्ठ । कुसन्देशमसूयामि, न त्वाम् ।

(ङ) किमहमम्बां भणामि ।

(च) भणाम्बां — यदार्यचारुदत्तोऽभिसारयितव्यस्तदा मण्डयामीति ।

(छ) तथा ।

---

१. 'सन्देसं खु अहं अ' ख. पाठः.

(ततः प्रविशति सज्जलकः ।)

**सज्जलकः**—

कृत्वा निशायां वचनीयदोषं
निद्रां च हित्वा तिमिरं भयं च ।
स एव सूर्योदयमन्दवीर्यः
शनैर्दिवा चन्द्र इवास्मि भीतः ॥ १ ॥

दिष्ट्या कर्मान्ते प्रभातम् । यावदिदानीं वसन्तसेनायाः परिचारिकाया मदनिकाया निष्क्रयार्थं मयेदं कृतम् । (परिक्रम्य) इदं वसन्तसेनाया गृहम् । यावत् प्रविशामि । (प्रविश्य) किन्नुखल्वभ्यन्तरस्था मदनिका । अथवा, पूर्वाह्णे गणिकानामभ्यन्तरे सान्निध्यम् । अतस्तत्रैव तया भवितव्यम् । यावच्छब्दापयामि । मदनिके! मदनिके! ।

**चेटी**—(आकर्ण्य) (क) सज्जळअस्स विअ सरो[2]। वावुदा अज्जुआ । ता उवसप्पिस्सं । (उपगम्य) इअह्मि ।

**सज्जलकः**—इतस्तावत् ।

**चेटी**—(ख) किं तुवं सङ्किदवण्णो विअ ।

**सज्जलकः**—न खलु, किञ्चित् कथयितुकामः ।

---

(क) सज्जलकस्येव स्वरः । व्यापृताज्जुका । तदुपसर्पिष्यामि । इयमस्मि ।
(ख) किं त्वं शङ्कितवर्ण इव ।

---

१. 'मन्दः ॥', २. 'रो । अण्णवा' ख. पाठः.

**गणिका** — (क) हञ्जे ! इमं चित्तफलअं सअणीए ट्ठावेहि । (विलोक्य) कहिं गआ हदासा । अहव अदूरगआए होदव्वं । जाव णं पेक्खिस्सं । (परिक्रम्यावलोक्य) अम्मो इअं सा अदिसिणिद्धाए दिट्ठीए केण वि मणुस्सेण पिबन्ती विअ सह मन्तअन्ती चिट्ठइ । तक्केमि एसो जो को वि क्कएण मं याचेदि ।

**सज्जलकः** — श्रूयतां रहस्यम् ।

**गणिका** — (ख) अजुत्तं पररहस्सं सोदुं, अहं गमिस्सं ।

**सज्जलकः** — अपि वसन्तसेना (इत्यर्धोक्ते)

**गणिका** — (ग) अहं अहिइंदा[1] एदाअं कहाअं । होदु, सुणिस्सं दावे[2] भविस्सदि । (पुनः प्रतिनिवृत्य स्थिता ।)

**सज्जलकः** — किं दास्यति त्वां निष्क्रयेण ।

**गणिका** — (घ) सो एव्व एसो । होदु, सुणिस्सं ।

---

(क) हञ्जे ! इदं चित्रफलकं शयनीये स्थापय । कुत्र गता हताशा । अथवा अदूरगतया भवितव्यम् । यावदेनां प्रेक्षिष्ये । अम्मो इयं सातिस्निग्धया दृष्ट्या केनापि मनुष्येण पिबन्तीव सह मन्त्रयमाणा तिष्ठति । तर्कयाम्येष यःकोऽपि क्रयेण मां याचते ।

(ख) अयुक्तं पररहस्यं श्रोतुम्, अहं गमिष्यामि ।

(ग) अहमधिकृतैतस्यां कथायाम् । भवतु, श्रोष्यामि तावद् भविष्यति ।

(घ) स एवैषः । भवतु, श्रोष्यामि ।

---

१. 'अ', २. 'णि' स. पाठः.

**चेटी**—(क) सज्जळअ! ममप्पदाणं पुढमं[1] एव्व अज्जुआए उत्तं।

**सज्जलकः**—तेन हीममस्यै प्रयच्छ, एवं वक्तव्या च—

अयं तव शरीरस्य प्रमाणादिव निर्मितः।
अप्रकाश्यो ह्यलङ्कारो मत्स्नेहाद् धार्यतामिति॥ २॥

**चेटी**—(ख) पेक्खामि दाव।

**सज्जलकः**—गृह्यताम्। (दर्शयति।)

**चेटी**—(ग) दिट्ठपुरुवो विअ अअं अळङ्कारो।

**गणिका**—(घ) ममकेरओ विअ अअं अळङ्कारो।

**चेटी**—(ङ) भणाहि भणाहि। को इमस्स आअमो[2]।

**सज्जलकः**—त्वत्स्नेहात् साहसं कृतम्।

**उभे**—(च) हं, साहसिओ।

**चेटी**—(आत्मगतम्) (छ) आ, अज्जुआए खु इमस्स आ-

(क) सज्जलक! मम प्रदानं प्रथममेवाज्जुकयोक्तम्।
(ख) पश्यामि तावत्।
(ग) दृष्टपूर्व इवायमलङ्कारः।
(घ) मदीय इवायमलङ्कारः।
(ङ) भण भण। कोऽस्यागमः।
(च) हं, साहसिकः।
(छ) आ, अज्जुकायाः खल्वस्याकृतिः कर्मदारुणतयोद्वेजनीया संवृत्ता। हा

१. 'प', २. 'ग' ख. पाठः.

इदी कम्मदारुणदाए उव्वेअणीआ संवुत्ता । (प्रकाशम्) हद्धि मम किदे उभअं संसइदं संवुत्तं — तव सरीरं चारित्तं च ।

**सज्जलकः** — उन्मत्तिके ! साहसे खलु श्रीर्वसति ।

**चेटी** — (क) [1]अपण्डिदो खु सि । को हि णाम जीविदेण सरीरं विक्कीणिस्सदि । अह कस्स गेहे इअं विस्सासवञ्चणा किदा ।

**सज्जलकः** — यथा प्रभाते मया श्रुतं — श्रेष्ठिचत्वरे प्रतिवसति सार्थवाहपुत्रश्चारुदत्तो नाम ।

**उभे** — [2]हुं ।

**सज्जलकः** — अयि,

विषादस्रस्तसर्वाङ्गी सम्भ्रमोत्फुल्ललोचना ।
मृगीव शर[3]विद्धाङ्गी कम्पसे चानुकम्पसे ॥ ३ ॥

**चेटी** — (ख) स[4]च्चं भणाहि । सत्थवाहकुळे साहसं करन्तेण तुए कोच्चि कुळवुत्तो सत्थेण अत्थि परिक्खदो वावादिदो वा ।

---

धिग् मम कृते उभयं संशयितं संवृत्तं — तव शरीरं चारित्रं च ।

(क) अपण्डितः खल्वासि । को हि नाम जीवितेन शरीरं विक्रेष्यति । अथ कस्य गेहे इयं विश्वासवञ्चना कृता ।

(ख) सत्यं भण । सार्थवाहकुले साहसं कुर्वता त्वया कश्चित् कुलपुत्रः शस्त्रेणास्ति परिक्षतो व्यापादितो वा ।

---

१. 'दुज्जणणो खु' क. पाठः. २. 'हं', ३. 'दिग्धाङ्गी', ४. 'व्वं' ख. पाठः.

**गणिका** — (क) सुट्ठु, मए वि[1] पुच्छिदव्वं एदाए पुच्छिदं।

**सज्जलकः** — मदनिके! एतावत् किं न पर्याप्तं, द्वितीयमप्यकार्यं करिष्यामि। न खल्वत्र[2] शस्त्रेण कश्चित् परिक्षतो व्यापादितो वा।

**चेटी** — (ख) सज्जळअ! सच्चं।

**सज्जलकः** — सत्यम्।

**चेटी** — (ग) साहु सज्जळअ! पिअं मे।

**सज्जलकः** — किं किं प्रियमित्याह। ईदृशं मदनिके!

त्वत्स्नेहबद्धहृदयो हि करोम्यकार्यं
सन्तुष्टपूर्वपुरुषेऽपि कुले प्रसूतः।
रक्षामि मन्मथगृहीतमिदं शरीरं
मित्रं च मां व्यपदिशस्यपरं च यासि ॥ ४ ॥

**चेटी** — (घ) सज्जळअ! सुणाहि। अज्जुआए अअं अळङ्कारो। (कर्णे) एवं विअ।

**सज्जलकः** — एवम्।

---

(क) सुष्ठु, मयापि प्रष्टव्यमेतया पृष्टम्।
(ख) सज्जलक! सत्यम्।
(ग) साधु सज्जलक! प्रियं मे।
(घ) सज्जलक! शृणु। अज्जुकाया अयमलङ्कारः। एवमिव।

---

१. 'वि अ पु', २. 'लु तत्र' ख. पाठः.

अज्ञानाद् या मया पूर्वं शाखा पत्रैर्वियोजिता।
छायार्थी ग्रीष्मसन्तप्तस्तामेव पुनराश्रितः॥ ५॥

गणिका — (क) सन्तप्पदि त्ति तक्केमि एदेण अकय्यं किदं त्ति।

सज्जलकः — मदनिके! एवं गते किं कर्तव्यम्।

चेटी — (ख) तहिं एव णिय्यादेहि, णहि मण्डइस्सदि अज्जुआ।

सज्जलकः — अथेदानीं सोऽमर्षान्मां चोर इति रक्षिपुरुषैर्ग्राहयिष्यति चेदत्र किं करिष्यामि।

चेटी — (ग) मा भाआहि भाआहि। कुळवुत्तो खु सो गुणाणं परितुस्सदि।

गणिका — (घ) साहु भद्दे! अवत्तव्वासि[1] अळङ्किदा विअ एदेण वअणेण।

सज्जलकः — सर्वथा न शक्ष्याम्यहं तत्र गन्तुम्।

चेटी — अअं अण्णो उवाओ।

(क) संतप्यत इति तर्कयामि एतेनाकार्यं कृतमिति।

(ख) तत्रैव निर्यातय, नहि मण्डयिष्यत्यज्जुका।

(ग) मा बिभीहि बिभीहि। कुलपुत्रः खलु स गुणानां परितुष्यति।

(घ) साधु भद्रे! अवक्तव्यास्यलङ्कृतेवैतेन वचनेन।

(ङ) अयमन्य उपायः।

१. 'सि' क. पाठः.

**गणिका** — (क) एदे गुणा वेसवासस्स[१]।

**सज्जलकः** — कोऽन्य उपायः।

**चेटी** — (ख) णं तव रूवञ्ञा अज्जुआ अवि सत्थवाहपुत्तो अ।

**सज्जलकः** — न खलु।

**चेटी** — (ग) तेण हि इमं दाव अळङ्कारं तस्स सत्थवाहपुत्तस्सवअणादो अज्जुआए णिय्यादेहि। एवं च किदे तुवं रक्खिदो, सो अय्यो अ अणिव्विण्णो भविस्सदि। अहं च[२] पीडिदा ण भविस्सं। आदु अज्जुअं च[३] पुणो वञ्चिअ पुणो एव्व दासभावो भवे।

**सज्जलकः** — मदनिके! प्रीतोऽस्मि।

**गणिका** — (घ) भोदु अब्भन्तरं पविसिअ उवविसामि। (तथा करोति।)

---

(क) एते गुणा वेशवासस्य।

(ख) ननु तव रूपज्ञाज्जुकापि सार्थवाहपुत्रश्च।

(ग) तेन हीमं तावदलङ्कारं तस्य सार्थवाहपुत्रस्य वचनादज्जुकायै निर्यातय। एवं च कृते त्वं रक्षितः, स आर्यश्चानिर्विण्णो भविष्यति। अहं च पीडिता न भविष्यामि। अथवा अज्जुकां च पुनर्वञ्चयित्वा पुनरेव दासभावो भवेत्।

(घ) भवत्वभ्यन्तरं प्रविश्योपविशामि।

---

१. 'सस्स', २. 'च अपीडिदा भविस्सामि।' ख. पाठः. ३. 'च णो' क. पाठः.

**चेटी**—(क) सज्जळअ! आअच्छ, कामदेवउळे मं पडिवाळेहि । अहं ओसरं जाणिअ अज्जुआए णिवेदेमि ।

**सज्जलकः**—बाढम् । (निष्क्रान्तः ।)

(ततः प्रविशत्यपरा चेटी ।)

**चेटी**—(ख) सुहं अज्जुआए । एसो सत्थवाहपुत्तस्स सआसादो कोच्चि बह्मणो आअदो अज्जुअं पेक्खिदुं ।

**गणिका**[1]—(सादरम्) (ग) गच्छ, सिग्घं पवेसेहि णं ।

**चेटी**[2]—(घ) तह । (उपसृत्य) एदु एदु अय्यो ।

(प्रविश्य)

**विदूषकः**—(सर्वतो विलोक्य) (ङ) अहो गणिआवाडस्स सस्सिरीअदा । णाणापट्टणसमागदेहि आआमिएहि पुत्तआ वाईअन्ति । संओजअन्ति[3] अ आहारप्पआराणि । वीणा वादीअन्ति[4] । सुवण्णआरा अळङ्कारप्पआराणि आदरेण जोजअन्ति ।

(क) सज्जलक! आगच्छ, कामदेवकुले मां प्रतिपालय । अहमवसरं ज्ञात्वाज्जुकायै निवेदयामि ।

(ख) सुखमज्जुकायाः । एष सार्थवाहपुत्रस्य सकाशात् कश्चिद् ब्राह्मण आगतोऽज्जुकां द्रष्टुम् ।

(ग) गच्छ, शीघ्रं प्रवेशयैनम् ।

(घ) तथा । एत्वेत्वार्यः ।

(ङ) अहो गणिकावाटस्य सश्रीकता । नानापट्टणसमागतैरागमिकैः पुस्तकानि वाच्यन्ते । संयोज्यन्ते चाहारप्रकाराः । वीणा वाद्यन्ते । सुवर्णकारा अलङ्कारप्रकारानादरेण योजयन्ति ।

१. 'का--सि', २. 'टी—ड' ३. 'न्ति आ' ख. पाठः. ४. 'द' क. पाठः.

चेटी — (क) एसा अज्जुआ । उवसप्पदु अय्यो ।

विदूषकः — (उपगम्य) (ख) सोत्थि होदीए ।

गणिका — (ग) साअदं अय्यस्स । हञ्जे ! आसणं अय्यस्स पादोदअं च ।

विदूषकः — (आत्मगतम्) (घ) सव्वं आणेदु वज्जिअ भोअणं ।

चेटी — (ङ) जं अज्जुआ आणवेदि । (आसनं ददाति पादोदकं च ।) उवविसदु अय्यो ।

विदूषकः — (उपविश्य) (च) पडिच्छदु आसणं भोदी । अहं किञ्चि भणिदुं आअदो ।

गणिका — (उपविश्य) (छ) अवहिदह्मि ।

विदूषकः — (ज) केत्तिअमत्तं खु तस्स अळङ्कारस्स मुळ्ळप्पमाणं ।

---

(क) एषाज्जुका । उपसर्पत्वार्यः ।

(ख) स्वस्ति भवत्यै ।

(ग) स्वागतमार्यस्य । हञ्जे ! आसनमार्यस्य पादोदकं च ।

(घ) सर्वमानयतु वर्जयित्वा भोजनम् ।

(ङ) यदज्जुकाज्ञापयति । उपविशत्वार्यः ।

(च) प्रतीच्छत्वासनं भवती । अहं किञ्चिद् भणितुमागतः ।

(छ) अवहितास्मि ।

(ज) कियन्मात्रं खलु तस्यालङ्कारस्य मूल्यप्रमाणम् ।

गणिका — (क) किंणिम्मित्तं खु अय्यो पुच्छदि ।

विदूषकः — (ख) सुणादु भोदी । तत्तहोदो चारुदत्तस्स गुणप्पच्चा[1]अणणिमित्तं खु तुए अळङ्कारो तहिं णिक्खित्तो । सो तेण जूदे हारिदो ।

गणिका — (ग) जूदे । जुज्जइ । तदो तदो ।

विदूषकः — (घ) तदो तस्स अळङ्कारस्स मुळ्ळभूदं इमं मुत्तावळिं पडिच्छदु भोदी ।

गणिका — (आत्मगतम्) (ङ) धिक्[2] खु गणिआभावं । ळुद्धत्ति मं तुळआदि । जइ[3] ण पडिच्छे, सो एव्व दोसो भविस्सदि । (प्रकाशम्) आणेदु अय्यो ।

विदूषकः — (च) इदं गह्णदु भोदी ।

गणिका — (गृहीत्वा) (छ) पडिच्छिदं तए त्ति अय्यो णिवेदेदु ।

---

(क) किन्निमित्तं खल्वार्यः पृच्छति ।

(ख) शृणोतु भवती । तत्रभवतश्चारुदत्तस्य गुणप्रत्यायननिमित्तं खलु त्वयालङ्कारस्तस्मिन् निक्षिप्तः । स तेन द्यूते हारितः ।

(ग) द्यूते । युज्यते । ततस्ततः ।

(घ) ततस्तस्यालङ्कारस्य मूल्यभूतामिमां मुक्तावलीं प्रतीच्छतु भवती ।

(ङ) धिक् खलु गणिकाभावम् । लुब्धेति मां तुलयति । यदि न प्रतीच्छामि, स एव दोषो भविष्यति । आनयत्वार्यः ।

(च) इदं गृह्णातु भवती ।

(छ) प्रतीष्टं तयेत्यार्यो निवेदयतु ।

---

१. 'च्चआणि', २. 'सिक्ख ग', ३. 'इ प' ख. पाठः.

**विदूषकः** — (आत्मगतम्) (क) को वि उवआरो वि ण[1] एदाए भणिदो । (प्रकाशम् ।) एवं होदु । (दत्त्वा निष्क्रान्तः ।)

**गणिका** — (ख) साहु चारुदत्त! साहु । भाअधेअपरिवुत्तदाए दसाए माणावमाणिदं[2] रक्खिदं ।

(प्रविश्य)

**मदनिका** — (ग) अज्जुए! सत्थवाहपुत्तस्स सआसादो कोच्चि मणुस्सो आअदो इच्छइ अज्जुअं पेक्खिउं ।

**गणिका**[3] — (घ) किं दिट्ठपुरुवो णवदंसणो वा ।

**मदनिका** — (ङ) अज्जुए! णहि, तस्सकेरओ त्ति मे पडिभादि ।

**गणिका** — (ज) गच्छ, पवेसेहि णं ।

---

(क) कोऽप्युपचारोऽपि नैतया भणितः । एवं भवतु ।

(ख) साधु! चारुदत्त साधु । भागधेयपरिवृत्ततायां दशायां मानावमानितं रक्षितम् ।

(ग) अज्जुके! सार्थवाहपुत्रस्य सकाशात् कश्चिद् मनुष्य आगत इच्छत्यज्जुकां द्रष्टुम् ।

(घ) किं दृष्टपूर्वो नवदर्शनो वा ।

(ङ) अज्जुके! नहि, तदीय इति मे प्रतिभाति ।

(च) गच्छ, प्रवेशयैनम् ।

---

१. 'अ', २. 'माणं र', ३. 'का—दि' ख. पाठः.

**मदनिका** —(क) तह । (निष्क्रान्ता ।)

**गणिका** —(ख) अहो रमणिज्जदा अज्ज दिवसस्स ।

(ततः प्रविशति मदनिका सज्जलकेन सह ।)

**सज्जलकः** —कष्टा खल्वात्मशङ्का नाम,

यः कश्चिच्चकितगतिर्निरीक्षते मां
सम्भ्रान्तो द्रुतमुपसर्पति स्थितो वा ।
सर्वांस्तांस्तुलयति दोषतो मनो मे
स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ ६ ॥

**मदनिका** —(ग) एसा अज्जुआ । उवसप्पदु अय्यो ।

**सज्जलकः** —(उपसृत्य) सुखं भवत्यै ।

**गणिका** —(घ) साअदं अय्यस्स । हञ्जे ! आसणं देदु अय्यस्स ।

**सज्जलकः** —भवतु भवतु । गृहीतमासनम् । त्वरिततरमनुष्ठेयं किञ्चित् कार्यमस्ति ।

(क) तथा ।
(ख) अहो रमणीयताद्य दिवसस्य ।
(ग) एषाज्जुका । उपसर्पत्वार्यः ।
(घ) स्वागतमार्यस्य । हञ्जे! आसनं दीयतामार्याय ।

१. 'ति! त्व' क. पाठः.

**गणिका**—(क) एवं, भणादु अय्यो ।

**सज्जलकः**—आर्यचारुदत्तेनास्मि प्रेषितः—यस्तावद-लङ्कारो मम हस्ते निक्षिप्तः, स त्वसंभोगमलिनतया गृहस्या-सान्निध्यात् कौडुम्बिकानां दुरारक्ष(म् ?:) । तद् गृह्यताम् इति ।

**गणिका**—(ख) इमं तस्स चारुदत्तस्स देदु अय्यो ।

**सज्जलकः**—भवति ! न खल्वहं गच्छामि ।

**गणिका**—(ग) अहं जाणामि तस्स गेहे साहसं करिअ आणीदो अअं अळङ्कारो । तस्स गुणाणि अणुकम्पेदु अय्यो ।

**सज्जलकः**—(आत्मगतम्) कथं विदितोऽस्म्यनया ।

**गणिका**—(घ) को एत्थ, पवहणं दाव अय्यस्स ।

**मदनिका**—(ङ) णेमिसद्दो विअ सुणीअदि । आअदेण पवहणेण होदव्वं ।

**गणिका**—(च) (स्वैराभरणैर्मदनिकामलङ्कृत्य) आरुहदु अय्यो अय्याए सह पवहणं ।

---

(क) एवं, भणत्वार्यः ।

(ख) इदं तस्मै चारुदत्ताय ददात्वार्यः ।

(ग) अहं जानामि तस्य गेहे साहसं कृत्वानीतोऽयमलङ्कारः । तस्य गुणान-नुकम्पतामार्यः ।

(घ) कोऽत्र, प्रवहणं तावदार्यस्य ।

(ङ) नेमिशब्द इव श्रूयते । आगतेन प्रवहणेन भवितव्यम् ।

(च) आरोहत्वार्य आर्यया सह प्रवहणम् ।

मदनिका —(क) अज्जुए! किं एदं।

गणिका—(ख) माखु माखु एवं मन्तिअ। अय्या खु सि दाणिं संवुत्ता। गह्णदु अय्यो। (मदनिकां गृहीत्वा सज्जलकाय प्रयच्छति।)

सज्जलकः—(आत्मगतम्) भोः कदा खल्वस्याः प्रतिकर्तव्यं भविष्यति। अथवा, शान्तं शान्तं पापम्।

नरः प्रत्युपकारार्थी विपत्तौ लभते फलम्।
द्विषतामेव कालोऽस्तु योऽस्या भवतु तस्य वा ॥७॥

(तया सह निष्क्रान्तः सज्जलकः।)

गणिका —(ग) चउरिए!।

(प्रविश्य)

चेटी —(घ) अज्जुए! इअह्मि।

गणिका —(ङ) हञ्जे! पेक्ख जागरन्तीए मए सिविणो दिट्ठो। एवं।

---

(क) अज्जुके! किमेतत्।

(ख) माखलु माखल्वेवं मन्त्रयित्वा। आर्या खल्वसीदानीं संवृत्ता। गृह्णात्वार्यः।

(ग) चतुरिके!।

(घ) अज्जुके! इयमस्मि।

(ङ) हञ्जे! पश्य जाग्रत्या मया स्वप्नो दृष्टः। एवम्।

**चेटी** — (क) पिअं मे, अमुदंकणाडअं संवुत्तं ।

**गणिका** — (ख) एहि इमं अळङ्कारं गह्णिअ अय्यचारुदत्तं अभिसरिस्सामो ।

**चेटी** — (ग) अज्जुए! तह । एदं पुण अभिसारिआसहा-अभूदं दुद्दिणं उण्णमिदं ।

**गणिका** — (घ) हदासे! मा हु वड्ढावेहि ।

**चेटी** — (ङ) एदु एदु अज्जुआ[1] ।

(निष्क्रान्ते ।)

चतुर्थोऽङ्कः ।

---

‡अवसितं चारुदत्तम् ।

---

शुभं भूयात् ।

---

(क) प्रियं मेऽमृताङ्कनाटकं संवृत्तम् ।
(ख) एहीममलङ्कारं गृहीत्वार्यचारुदत्तमभिसरिष्यावः ।
(ग) अज्जुके! तथा । एतत् पुनरभिसारिकासहायभूतं दुर्दिनमुन्नमितम् ।
(घ) हताशे! मा खलु वर्धय ।
(ङ) एत्वेत्वज्जुका ।

---

१. 'आ । (इति नि) क. पाठः.

---

‡ पदद्वयमिदं ख. पुस्तके न दृश्यते ।

# श्लोकानुक्रमणिका ।


| | पृष्ठम् |
|---|---|
| अकामा ह्रियते | २३ |
| अज्ञानाद् या | ७७ |
| अद्यास्य भित्तिषु | ५७ |
| अभिनयति | १५ |
| अयं तव शरीर | ७४ |
| अर्थेषु कामं | ६७ |
| अविज्ञातप्रयु | २७ |
| अशिक्खु तीक्खे | १४ |
| असौ हि दत्त्वा | ५० |
| आलोकविशाला | १७ |
| इयं हि निद्रा | ५२ |
| उत्कण्ठितस्य | ४९ |
| उदयति हि शशा | ३१ |
| एशा हि वाशू | २१ |
| एषा रङ्गप्रवे | २२ |
| एषा हि वयसो | २१ |
| कं वाशुजेवे | १२ |
| कः श्रद्धास्यति | ६२ |
| कामं नीचमिदं | ५९ |
| कामं प्रदोष | १७ |
| किं त्वं पदात् | १२ |
| किं त्वं भयेन | ११ |
| किं याशि धाव | ११ |
| कृत्वा निशायां | ७२ |
| कृत्वा शरीर | ९४ |
| क्षीणा ममार्था | ९ |
| घिद्गुळदहि | ६ |
| जनयति खलु | १३ |
| तथा विभव | ५७ |
| तरुणजन | १५ |
| त्वत्स्नेहबद्ध | ७६ |
| दारिद्र्यात् पुरु | १० |
| दुवेहि अह्मेहि | ११ |
| देशः को नु जला | ५९ |
| धिगस्तु खलु | ६९ |
| नरः प्रत्युपका | ८५ |
| निःश्वासोऽस्य | ५८ |
| परिचिततिमिरा | १३ |
| भवांस्तावद | ६४ |
| मयि द्रव्यक्ष | ६७ |
| मार्जारः प्लवने | ५७ |
| यं समालक्ष्य | ६८ |
| यः कश्चिच्चकि | ८३ |
| यत्र मे पतितः | २८ |
| यासां बलिर्भ | ८ |
| रक्तं च तार | ९० |

| | पृष्ठम् | | पृष्ठम् |
|---|---|---|---|
| लिम्पतीव तमो | १७ | स मद्विधानां | २४ |
| लुब्धोऽर्थवान् | ५५ | सिंहाक्रान्तं | ९६ |
| विभवानुवशा | १० | सुखं हि दुःखा | ९ |
| विषादत्रस्त | ७५ | सुलभशरण | १७ |
| सत्यं न मे | ९ | | |

## Ready for sale.

---

भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. 1 0 0

---

## Trivandrum Sanskrit Series.

---

No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. 1 0 0

No. 2 — अभिनवकौस्तुभमाला – दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. 0 2 0

No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhaṭṭa Bâṇa. 0 4 0

No. 4 — शिवलीलार्णवः (Kâvya) by Nîlakaṇṭha Dîkshita. 2 0 0

No. 5 — व्यक्तिविवेकः (Alankâra) by Mahima Bhaṭṭa with commentary. 2 12 0

No. 6 — दुर्घटवृत्तिः (Vyâkaraṇa) by Saraṇadeva. 2 0 0

No. 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. 2 4 0

No. 8 — प्रद्युम्नाभ्युदयम् (Nâtaka) by Ravi Varma Bhûpa. 1 0 0

No. 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. 0 8 0

No. 10 — मातङ्गलीला (Gajalakshaṇa) by Nîlakaṇṭha. 0 8 0

No. 11 — तपतीसंवरणम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. 2 4 0

No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. 0 8 0

No. 13 — सुभद्राधनञ्जयम् (Nâtaka) by Kulasekhara Varma with the commentary of Sivarâma. 2 0 0

No. 14 — नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. 3 8 0

No. 15 — स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. 2 8 0

No. 16—प्रतिज्ञायौगन्धरायणम् (Do.) Do. 1 8 0

No. 17—पञ्चरात्रम् (Do.) Do. 1 0 0

No. 18—नारायणीयम् (Stuti) by Nârâyaṇa Bhaṭṭa with the commentary of Desamangala Vârya. 4 0 0

No. 19—मानमेयोदयः (Mímâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. 1 4 0

No. 20—अविमारकम् (Nâtaka) by Bhâsa. 1 8 0

No. 21—बालचरितम् (Do.) Do. 1 0 0

No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa 1 8 0

No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) 1 12 0

No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. 1 0 0

No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri 0 12 0

No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa 0 12 0

No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinatha and Vivarana of Nârayana Pandita (1 & 2 Sargas) 1 12 0

No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas 0 8 0

No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswamin (3rd Kanda) 2 4 0

No. 30—वास्तुविद्या (Silpa) 0 12 0

No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (4th, 5th, & 6th Kaṇdas) 1 0 0

No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (3rd, 4th & 5th Sargas) 2 8 0

No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dipaprabhâ of Narayana 0 8 0

No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin 1 4 0

No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha 1 8 0

No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (6th, 7th & 8th sargas) 3 0 0

No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary 0 4 0

No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikasarvasva of Sarvananda (1st Kanda) 2 0 0

No. 39—चारुदत्तम् (Nataka) by Bhasa 0 12 0

***Apply to :—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*

| | | | | |
|---|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. | 2 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Do.) Do. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् (Do.) Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyaṇa Bhaṭṭa with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mímâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् (Do.) Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinatha and Vivarana of Nârayana Pandita (1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswamin (3rd Kanda) | 2 | 4 | 0 |
| No. 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (4th, 5th, & 6th Kaṇdas) | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (3rd, 4th & 5th Sargas) | 2 | 8 | 0 |

No. 33—वाररुचसंग्रहः (Vyâkarana) with the commentary Dipaprabhâ of Narayana 0 8 0

No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmanimakhin 1 4 0

No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha 1 8 0

No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinâtha and Vivarana of Nârâyana Pandita (6th, 7th & 8th sargas) 3 0 0

No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary 0 4 0

No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tikasarvasva of Sarvananda (1st Kanda) 2 0 0

No. 39—चारुदत्तम् (Nataka) by Bhasa 0 12 0

***Apply to :—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*

